RNI Ref. No. 1298256
Title Code :- UPMUL00663
ISSN 2456-2874

# श्रुतिनिश्श्वसिता

(वेदविज्ञानविषयिणी मूल्याङ्किता राष्ट्रिया शोधपत्रिका)

(REFEREED NATIONAL RESEARCH JOURNAL OF VEDIC SCIENCES)

चतुर्थोऽङ्कः, मार्च - 2019





## वेदविभागः

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)

"नैकद्वारा 'ए' श्रेण्या प्रत्यायितः"

(भारतशासनमानवसंसाधनविकासमंत्रालयाधीनः)

लखनऊपरिसरः विशालखण्डः 4, गोमतीनगरम्, लखनऊ - 226010

RNI Ref. No. 1298256
Title Code:- UPMUL00663

ISSN 2456-2874

# श्रुतिनिश्श्वसिता

(वेदविज्ञानविषयिणी मूल्याङ्किता राष्ट्रिया शोधपत्रिका)

(REFEREED NATIONAL RESEARCH JOURNAL OF VEDIC SCIENCES)

चतुर्थोऽङ्कः, मार्च-2019






## वेदविभागः

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)

''राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा ''NAAC'' द्वारा 'ए' श्रेण्या प्रत्यायितः''

(भारतशासनमानवसंसाधनविकासमंत्रालयाधीनः)

लखनऊपरिसरः, विशालखण्डः 4, गोमतीनगरम्, लखनऊ-226010

# पत्रिका-श्रुतिनिश्श्वसिता

चतुर्थसंस्करणम्- 500 (पञ्चशतम्)
मूल्यम् - 50/-
प्रकाशकः
**प्राचार्यः,**
**राष्ट्रियसंस्कृतसंस्थानम्**
(मानितविश्वविद्यालयः) लखनऊपरिसरः, लखनऊ
राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा (NAAC) 'ए' श्रेण्या प्रत्यायितः
विशालखण्डः-4, गोमतीनगरम्, लखनऊ-226010, उत्तरप्रदेशः

**RNI Ref. No. 1298256**
**Title Code:- UPMUL00663**

**ISSN 2456-2874**
Price: 50/-

Publisher :
PRINCIPAL,
RASHTRIYA SANSKRIT SANSTHAN
(DEEMED UNIVERSITY), LUCKNOW CAMPUS
(Accrediated 'A' Grade by 'NAAC')
(Under the Ministry of Human Resource Development, Govt. of India)
Vishal Khand-4, Gomti Nagar, Lucknow-226010 (U.P.)
Website: www.sanskrit.nic.in e-mail/: rskslucknow@yahoo.com

मुद्रकः
पनार ऑफसेट, 17, अशोकमार्गः, लखनऊ-1

# प्रधान-सम्पादकीयम्

लौकिकपारलौकिकेति द्विविधसम्पत्समन्विताः सन्ति वेदाः। सम्पूर्णे खलु विश्वे वैदिकज्ञानसम्पत्सम्पन्नः भारतमेवैकदेशः यत्र दार्शनिकैः सन्देहलेशोन्मूलनार्थं प्रमाणपुष्टिहेतवे श्रुत्यवलम्बनं क्रियते। वेदानां वैशिष्ट्यं प्रतिपादयता भगवता कृष्णद्वैपायनेनोक्तम्-

**सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्।**

**वेदे हि निष्ठा सर्वस्य यद् यदस्ति च नास्ति च।**

(म.शा.प.-270/43)

एतावता वयं सर्वविधपूर्वाग्रहं विमुच्य वक्तुं क्षमाः यदेतत् सकलकलाकोटिपरिव्याप्तं शास्त्रं सर्वथैव समसामयिकमार्षतरञ्चेति। सम्प्रत्यखिलविश्वे यत्र मानवाधिकारस्य कृते लोकाः नैकमताः सन्ति। परं सामाजिकसौहार्दसमुत्कर्षाय अस्मत्पूर्वजैः समष्टिहितम् प्रकल्पितम्- ''**संवहनाय-पुमान्पुमांसं परिपातु विश्वतः॥**''

वैदिकवाङ्मये मन्त्रोच्चारणविधिविमर्शः'' इति विषयमभिलक्ष्य राष्ट्रियसंस्कृतसंस्थानस्य लक्ष्मणपुरस्थपरिसरस्य वेदविभागेन ऐषमः आयोजितस्य संगोष्ठीरूपसारस्वतानुष्ठानस्य कार्यवृत्तं प्रकाश्यते। कामयेऽहं यदियं ''श्रुतिनिश्श्वसिता'' नाम्नी पत्रिका अस्माकं परिसरस्य राष्ट्रस्य च गौरवं वर्धापयिष्यते। सम्पादकाः लेखकाश्च अभिनन्दनीयाः।

प्रो. विजयकुमारजैनः
(प्राचार्यः)

# सम्पादकीयम्

अस्माकं सर्वेषां शास्त्राणां साहित्यकलासभ्यतासंस्कृत्यादीनां मूलो वेद एव अत्र नास्ति कश्चित् संदेहः। वेदाः ज्ञानराशिकारणात् व्यापकतत्त्वदर्शनादिभिः समलङ्कृतत्वात् सम्पूर्णविश्वस्य विदुषां चेतः आकृष्टवन्तः। वेदानां ज्ञानविज्ञानमेव दृष्ट्वा प्रायः समग्रविद्वत्समाजेन एकस्वरेण भारतस्य महत्ता श्रेष्ठता च अङ्गीकृता। न ह्यस्य कर्ता कश्चिद् बृहदारण्यकोपनिषदि लिखितं यद्-

**''अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो, यजुर्वेदः, सामवेदोऽथर्वाङ्गिरसः''।**

- बृह.-2.4.10

परमब्रह्मणः निश्वासात् ''ऋग्वेदादयः'' प्रादुर्भूताः। उक्तञ्च श्वेताश्वेतरोपनिषदि यत्- सर्वप्रथमं वेदस्य ज्ञानं ब्रह्मा उक्तवान्-

**''यो ब्रह्माणं विदधातिपूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।।''** श्वे.- 9.19

प्राक्काले तु यजनकर्मणि सस्वरमन्त्रोच्चारमवश्यमेव विधीयते स्म। परन्तु शनैः शनैर्भाषायां स्वरधर्माणां प्रचलनं विलुप्तं जातमिति। कालक्रमाद् यज्ञानुष्ठानप्रवृत्तिरद्य लुप्तप्रायाऽस्ति।

पाणिनीयशिक्षायां स्वरहीनमन्त्रोच्चारणमनिष्टाकारकं तथा चोक्तम्-

**मन्त्रोहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**

नारदीयशिक्षायामपि निर्दिष्टमस्ति-

**प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते।**

**यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून्।।**

एवं मन्त्रगतं गूढार्थं परिज्ञातुमपि स्वरविज्ञानस्यान्यतमं वैशिष्ट्यमस्ति। स्वरसाहाय्येन पदार्थभ्रान्तिर्विनश्यति। स्वरव्यत्ययेन तु वास्तविकोऽर्थ एव विलुप्येत। अत एव वेदे स्वराणां यथास्थिति एव मन्त्रार्थज्ञानाय प्रयत्नो विध ेयः। अधुनाऽपि भारतसर्वकारैर्वेदविद्यायाः संवर्धनाय सम्यग् रणनीतिर्निर्मातव्या वर्तमानकालिकशिक्षया सह वैदिकशिक्षा अपि योजनीया अथवा गुरुपरम्परानुसारं गुरुकुलानि सञ्चालनीयानि, येन समाजे नैतिकता-मानवताभ्रातृत्वानां विस्तारः स्यात्।

राष्ट्रियसंस्कृतसंस्थानेन 24-25 मार्च 2019 तमे वर्षे वेदविभागे **''वैदिकवाङ्मये मन्त्रोच्चारण विधिविमर्शः''** इति विषयोपरि द्विदिवसीयराष्ट्रियसंगोष्ठी आयोजिता। आयोजने अस्मिन् देशस्य वैदिकविचारकाः आगत्य स्वीयविचारं प्रकटीकृतवन्तः। एतद्विचारोऽस्माकं समाजे केन प्रकारेण प्रस्फुटितो भवेद् इत्येव विचारं

कृत्वा संस्थानेन वेदविभागस्य ''श्रुतिनिश्श्वसिता'' इति शोधपत्रिकायां सारगर्भित-शोधपत्राणां प्रकाशनं विधीयते। अवसरेऽस्मिन् अस्माकं संरक्षकेभ्यः कुलपतिमहोदयेभ्यः प्रो. परमेश्वरनारायणशास्त्रिभ्यः, परिसरप्राचार्येभ्यः प्रो. विजयकुमारजैनमहोदयेभ्यः, राष्ट्रियवेदविभागाध्यक्षेभ्यः प्रो. मनोजकुमारमिश्रवर्येभ्यः, लखनऊपरिसरस्य वेदविभागाध्यक्षेभ्यः प्रो. भारतभूषणत्रिपाठिमहोदयेभ्यश्च धन्यवादं नमनं च समर्पयामः। एवञ्च अवसरेऽस्मिन् समस्तवैदिकविदुषां कृते च नमनं कुर्मः, येषां आलेखरूपेण श्रमः प्रकाश्यते। चतुर्थाङ्कस्य प्रकाशनावसरे सर्वेभ्यः परामर्शकेभ्यः पारिसरीयान्यविभागस्य, विभागाध्यक्षेभ्यः, अग्रजेभ्यः सहसम्पादकेभ्यः टङ्कणकार्यकर्तृभ्यः श्रीविकासचन्द्रजैनमहोदयेभ्यः, पनारमुद्रकेभ्यश्च हृदयेन प्रणामाञ्जलिं कार्तज्ञ्यञ्च समर्पयामः।

अस्यां शोधपत्रिकायां प्रकाशितशोधालेखानामध्ययनेन समाजस्य एवं समग्रविश्वस्य राष्ट्रस्य च कश्चन सत्यमार्गः मिलिष्यति, तदा अस्माकं परिश्रमः सार्थको भविष्यतीति विरमामो नमामश्च।

परिधावीकृतनामाब्दः इत्थम्

चैत्रकृष्णपक्षाष्टमी सम्पादकाः

लक्ष्मणपुरी

दिनाँक- 28/3/2019

# विषयानुक्रमणिका



## संस्कृतखण्डः

## हिन्दी खण्डः

# नक्षत्राणां वेदमूलकता

**- प्रो. रामराज उपाध्यायः**

प्रायशः जानन्ति सर्वे नक्षत्राणां विषये। ज्योतिषस्य पञ्चाङ्गे तिथिवारनक्षत्रयोगकरणादीनि स्वीक्रियन्ते। मानवजीवने नक्षत्राणामतीव महत्त्वमस्ति। ज्योतिर्विद्यानुसारेण जन्मांगस्य राश्यंगस्य च महत्त्वं फलादेशे स्वीक्रियते। अत्र प्रथमं जन्मांगं भवति, यत् जन्मकालानुसारेण विरच्यते। जन्मांगे जन्मकालस्य सत्यं ज्ञानमावश्यकम्। असत्कालः कुण्डलीनिर्माणाय प्रशस्तो न भवति, यतोहि इष्टकालादिज्ञाने वैषम्यं प्राप्यते । प्रकारेणानेन अग्रिमा प्रक्रिया अपि प्रभाविता भवति। द्वितीयं नक्षत्रकालिकं ज्ञानमस्ति, यस्मिन् नक्षत्राणां राशिर्निर्मीयते। यथा अश्विनीभरणीकृतिकानां पादमेकं मेषः इत्यनेन सुस्पष्टं भवति। अश्विनीनक्षत्रस्य भरणीनक्षत्रस्य च सम्पूर्णं पादं कृतिकानक्षत्रस्य प्रथमं पादं संयोज्य मेषराशिः ज्ञायते। अत्र राश्यनुसारेण राश्यंगस्य निर्माणं क्रियते। जन्मकाले नक्षत्रं किमासीदित्यपि कुत्रचित् न ज्ञायते तत्र प्रसिद्धनाम्ना राशिर्निर्मीयते। यथा चू चे चो ला इति अश्विनीनक्षत्रस्याक्षराणि सन्ति। अत्र कस्यापि प्रसिद्धनाम् अत्रोक्तानामक्षराणामुपरि विद्यते चेत् तस्य जन्म कस्मिन्नक्षत्रे जातम् इति विचारिते सति मेषराशिः सुनिश्चतो भवति। प्रकारेणानेन नक्षत्राणां महत्त्वम् अस्माकं समेषां जीवने विशदतया प्राप्यते। कस्यापि जनस्य कालः सम्यक् न गच्छति चेत् दैवज्ञपार्श्वं गत्वा, स विचारं करोत्यस्मात्समयः समीचीनो नास्ति, अतः विचारः कर्त्तव्यः। ज्यौतिषशास्त्रे विचारस्य विविधाः प्रक्रियास्सन्ति। परञ्च समाधानस्य प्रमुखा प्रक्रिया वर्तते संबंधितनक्षत्रदेवस्य पूजनं येन शान्तिः स्यात्। अतः तस्याधिष्ठातृदेवस्य पूजनं हवनं तत्संबद्धदानं च कल्याणकरं भवति। पूजनं कस्येति विषये प्राप्यते-

**दैवाधीनं जगत्सर्वं मन्त्राधीना तु देवता।**

**ते मन्त्रा ब्रह्मणाधीना तस्मात् ब्राह्मणदेवता॥**

अत्र स्पष्टमस्ति सम्पूर्णं जगत् दैवाधीनमस्ति परञ्च ताः देवताः मन्त्राधीनास्सन्ति। अर्थात् मन्त्रस्य संबंधः देवेन सह विद्यते। प्रायशः देवतानां पूजनं समन्त्रकं क्रियते । निरुक्ते प्राप्यते यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुंक्ते तद्दैवतः स मन्त्रो भवति। अतः देवेन सह मन्त्राणां संबंधः वेदे विशदतया प्राप्यते। नक्षत्राणां वेदमूलकतायाः ज्ञानमतीवावश्यकम्। अत्र नक्षत्राणां वेदमौलिकताज्ञानाय प्रयासः क्रियते। प्रयासोयं वैदिकज्ञानवर्द्धनाय विदुषां प्रमोदाय च भविष्यति।

नक्षत्रेषु प्रथमनक्षत्रस्य नाम अश्विनी अस्ति। इदं नक्षत्रं नासत्यदस्राश्वियुक्- तुरगवाज्यश्वहय इत्यादि नाम्ना ज्ञायते। अस्य नक्षत्रस्य वैदिकमन्त्रः प्राप्यते-

[1] **अश्विनौ तेजसा चक्षुः प्राणेन सरस्वती वीर्यम्।**

**वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम्।**

नक्षत्रस्यास्य देवता अश्विनौ स्तः। वस्त्रोपनयनक्षौर- सीमन्ताभरणक्रिया। स्थापनाश्चेभयानस्त्रीकृषि- विद्यादयोश्विगे इत्यनुसारेण वस्त्रादिधारणम्, उपनयनादिकम्, क्षौरकार्यम्, सीमन्तसंस्कारादिकार्यम्, आभरणादिकरणम्,

स्थापनाकृषिविद्येत्यादीनि कार्याणि सम्पाद्यन्ते। द्वितीयं नक्षत्रमस्ति भरणी। अन्तकयमकृतान्तादीन्यस्य नक्षत्रस्य नामानि सन्ति। अस्य नक्षत्रस्य संबंद्धमन्त्रः वेदे प्राप्यते यथा–

[2] **यमायत्वा मखायत्वा सूर्यस्त्वा तपसे । देवस्त्वा सवितामद्धानक्तुपृथिव्याः स गुं स्पृशस्पाहि। अर्चिरसि शोचिरसि तपोसि।**

अस्य नक्षत्रस्य देवता यमो विद्यते। अस्मिन्नक्षत्रे–

**वापीकूपतडागादिविषशस्त्रोग्रदारुणाः। बिलप्रवेशगणितनिःक्षेपयाम्यभे शुभाः॥**

वापीकूपतडागादि– कार्येषु विषशस्त्राद्युग्रदारुणादिकार्येषु भरणीनक्षत्रस्य विचारः क्रियते। मुहूर्तचिन्तामणौ उग्रसंज्ञकनक्षत्रेषु भरणीनक्षत्रं निबद्धमस्ति।

तृतीयं नक्षत्रं कृतिका विद्यते। अग्निवह्न्यलकृशानुदहनपावकहुतभुक्हुताशादीनि नामानि सन्त्यस्य। कृतिकानक्षत्रस्य वेदमन्त्रः प्राप्यते–[3] **अयमग्निः सहत्रिणोवाजस्य शतिनस्पतिः। मूर्द्धा कवीरयीणाम्।** अग्निरस्त्यस्य देवता। **अग्न्याधानास्त्रशस्त्रोग्रसन्धिविग्रहदारुणाः। संग्रामौषधवादित्रक्रियाः शस्ताश्च वह्निभे।**

इत्यनुसारेण अग्नयाधानम्, अस्त्रशस्त्रकार्यम्, सन्धिविग्रदारुणादिकार्यम्, संग्रामादिकार्यम्, औषधादिनिर्माणमुत वा प्रथमसेवनकार्यम्, वादनयन्त्रादिप्रशिक्षणात्मिकाः क्रियाः शोभनाः भवन्ति। चतुर्थ नक्षत्रं रोहिणी विद्यते। अस्य नक्षत्रस्य धाताब्रह्माकः विधाताद्रुहिणविधिविरंचिप्रजापतीत्यादीनि नामानि प्राप्यन्ते। रोहिणी नक्षत्रस्य वेदमन्त्रः –

[4] **ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेन आवः।**
**सबुध्न्या उपमा अस्य विष्ठाः सतश्चयोनिमसतश्च विवः॥**

अस्य मन्त्रस्य देवता ब्रह्मा विद्यते।

**सीमन्तोन्नयनोद्वाहवस्त्रभूषास्थिरक्रियाः। हयहस्त्यभिषेकाश्च प्रतिष्ठा ब्रह्मभे शुभाः॥**

इत्यनुसारेण सीमन्तोन्नयनसंस्कारः, विवाहसंस्कारसंस्कारः, वस्त्राभूषणकार्याणि, वृक्षारोपणादिक्रियाः, अश्वादीनां क्रयविक्रयं वा, राज्याभिषेकादीनि कार्याण्यस्मिन्नक्षत्रे स्वीक्रियन्ते।

पञ्चमं स्थानमस्ति मृगशिरानक्षत्रस्य। शशिभृत्शशीशशांकमृगांकविधुहिमांशु– सुधांश्वित्यादीनि नामानि सन्त्यस्य। मृगशिरानक्षत्रस्य मन्त्रः–

[5] **सोमो धेनु गुं सोमो अर्व्वन्तमाशु गुं सोमो व्वीरं कर्म्मण्यं ददाति। सादन्यंविदत्थ्य गुं सभेयम्पितृश्रवणं यो ददाशदस्मै॥**

अस्य देवता चन्द्रमा ज्ञायते। **प्रतिष्ठाभूषणोद्वाहसीमन्तोन्नयनक्रियाः। क्षौरवास्तुगजोष्ट्राप्व्ययात्राः शस्ताश्च चन्द्रभे** इत्यनुसारेण देवादीनां प्रतिष्ठा, आभूषणादिनिर्माणम्, विवाहकार्यम्, सीमन्तोन्नयन–क्षौरादिक्रियाणां सम्पादनम्, गजादियात्राकृत्यानि मृगशिरा नक्षत्रे क्रियन्ते।

षष्ठस्थानमस्ति आर्द्रा नक्षत्रस्य। रुद्रशिवेशत्रिनेत्रादीनि नामानि सन्ति आर्द्रा नक्षत्रस्य। आर्द्रा नक्षत्रस्य मन्त्रः– [6] **नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुतते नमः।**

अस्य देवता रुद्रो विद्यते। **ध्वजतोरणसंग्रामप्राकारास्त्रक्रियाशुभाः। सन्धिविग्रहवैराणि रसाद्याः सर्वभे शुभाः** इत्यनुसारेण ध्वजतोरणादीन्यन्यानि कार्याण्यस्मिन्नक्षत्रे कर्तुं शक्यते। सप्तमं स्थानमस्ति पुनर्वसुनक्षत्रस्य। आदित्यादित्यनाम्ना ज्ञायते इदं नक्षत्रम्। पुनर्वसुनक्षत्रस्य वेदमन्त्रः प्राप्यते–

**[7] अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।**

**विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्।**

अस्य देवता अदितिदेवमाता अस्ति। प्रतिष्ठायानसीमन्तवस्त्र- वास्तूपनयनम्। क्षौराश्वकर्मादितिभे विधेयं धान्यभूषणम् इत्यनुसारेण प्रतिष्ठाकार्यम्, यानादिकार्यम्, वास्त्वित्यादीनि कार्याण्यस्मिन्नक्षत्रे सम्पाद्यन्ते।

अष्टस्थानमस्ति पुष्यनक्षत्रस्य। इज्यगुरुपुष्यजीवतिष्यदेवपुरोहितेत्यादीन्यस्य नक्षत्रस्य नाम। पुष्यनक्षत्रस्य वेदमन्त्रः-

**[8]बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु।**

**यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्।**

नक्षत्रस्यास्य देवता बृहस्पतिरस्ति।

**यात्राप्रतीष्ठासीमन्तव्रतबन्धप्रवेशनम्। करग्रहं विना सर्वं कर्म देवेज्यभे शुभम्।**

अर्थात् यात्राप्रतिष्ठेत्यादीनां कार्याणां सम्पादनं पुष्यनक्षत्रे क्रियते। नवमं स्थानमस्ति आश्लेषानक्षत्रस्य। सर्पउरगभुजगभुजंग अहिभोगीत्यादीनि नामानि सन्त्यस्य नक्षत्रस्य। आश्लेषा नक्षत्रस्य वेदमन्त्रः

**[9] नमोस्तु सर्प्येभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।**

अस्य देवता सर्पो प्राप्यते।

**अनष्टतं व्यसनं द्यूतं धातुवादौषधावहम्। विवादरसवाणिज्यं कर्म कद्रुजभे शुभम्।।**

इत्यनुसारेण अनृतव्यसनद्यूतादीनि कार्याण्यस्मिन् नक्षत्रे कर्तुं शक्यते।

दशमं स्थानमस्ति मघानक्षत्रस्य। पितृपितरेत्यादीनि नामानि भवन्ति अस्य नक्षत्रस्य। मघानक्षत्रस्य वेदमन्त्रः-

**[10] पितृभ्यः स्वधायिभ्यः। स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपिता महेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरो मीमदन्त पितरो तीतृपन्त पितरः पितरः शुन्धध्वम्।**

अस्य नक्षत्रस्य देवता पितरस्सन्ति। **कृषवाणिज्यगोधान्यरणोपकरणादिकम्। विवाहनृत्यगीताद्यं निखिलं कर्म पैतृभे** इत्यनुसारेण कृषिसंबंधीनि कार्याणि यथा बीजवपनम्, कणमर्दनम्, सिंचनकरणम्, भाण्डारणम्, गोसंबंधीनि कार्याणि विवाहनृत्यगीतादीनि कार्याण्यप्यस्मिन्नक्षत्रे क्रियन्ते। एकादशस्थानमस्ति पूर्वाफाल्गुनिनक्षत्रस्य। भगयोनिभग्येत्यादीनि नामानि सन्त्यस्य नक्षत्रस्य। पूर्वाफाल्गुनिनक्षत्रस्य मन्त्रः-

**[11] भगप्रणेतर्भगसत्यराधो भगे मान्धियमुदवाददन्नः।**

**भगप्रनोजनय गोभिरश्वैभगप्रनृभिर्नृवन्तः स्याम।**

अस्य नक्षत्रस्य देवता भगः सूर्यविशेषो विद्यते।

**विवादविषशस्त्राग्निदारुणोग्राहवादिकम्।**

**पूर्वात्रये खिलं कर्म कर्त्तव्यं मांसविक्रयः।।**

इत्यनुसारेण विवादादीनि कार्याणि, विषशस्त्रादीनि कार्याणि, अग्न्यादीनिकार्याणि, उग्रसंज्ञकानिकार्याणि पूर्वाफाल्गुनिसहितेषु त्रिषु पूर्वाषु क्रियन्ते।

द्वादशस्थानमस्त्युत्तराफाल्गुनिनक्षत्रस्य। अर्यमेत्यादीनि नामानि गदितान्यस्य। उत्तराफाल्गुनिमन्त्रः-

[12] **दैव्या बद्धर्व्यू आगत गुं रथेन सूर्यत्त्वचा।**

**मध्वा यज्ञ गुं समंजाथे तं प्रत्नक्था यं व्वेनश्चित्रंदेवानाम्।**

अस्य नक्षत्रस्य देवता अर्यमा अस्ति। प्रतीष्ठोद्वाह- **सीमन्ताभिषेकोव्रतबन्धनम्। प्रवेशस्थापनाश्वे-भवास्तुकर्मोत्तरात्रये** इत्यनुसारेण त्रिषूत्तराषु प्रतिष्ठा अर्थात् देवमन्दिरस्य देवस्य च प्राणप्रतिष्ठा, विवाहादीनि कार्याणि, सीमन्तोन्नयनादिसंस्कारकृत्यानि प्रवेशादीनिकर्माण्यप्यस्मिन्नक्षत्रे क्रियन्ते। त्रयोदशस्थानमस्ति हस्तनक्षत्रस्य। रविकरसूर्यब्रध्नार्कतरणितपनादीनि नामान्यस्त्यस्य नक्षत्रस्य। हस्तनक्षत्रस्य मन्त्रः-

[13] **बिभ्राड्बृहत्पिबतु सौम्यं मद्ध्वायुर्दधद्यज्ञपता वविह्रुतम्।**

**वातजूतोयो अभिरक्षतित्मनाप्रजाः पुपोषपुरुधाविराजति।**

अस्य नक्षत्रस्य देवता सूर्य ज्ञायते।

चतुर्दशस्थानमस्ति चित्रानक्षत्रस्य । त्वष्टृत्वाष्ट्रतक्षेत्यादीनि नामानि सन्ति अस्य नक्षत्रस्य। चित्रानक्षत्रस्य वेदमन्त्रः-

[14] **त्वष्टा तुरीपो अद्भुत इन्द्राग्निपुष्टिवर्द्धना। द्विपदापदाच्छन्द इन्द्रियमुक्षा गौर्नव्वयोदधुः ।**

अस्य नक्षत्रस्य देवता त्वष्ट्रा विश्वकर्मा विद्यते। प्रवेशवस्त्रसीमन्तप्रतिष्ठाव्रत- बन्धनम्। त्वाष्ट्रभे वास्तुविद्याश्च क्षौरभूषणकर्म यत्।। अत्र विदितमस्ति चित्रानक्षत्रे प्रवेशादीनि कर्माणि, प्रतिष्ठाव्रतबन्धनादीनि कार्याणि, वास्त्वित्यादीनिकार्याणि, क्षौरभूषणादीनिकर्माणि च कर्तुं शक्यन्ते। पञ्चदशस्थानमस्ति स्वातिनक्षत्रस्य। वायुवातानिलसमरपवनमारुतेत्यादीनि नामानि सन्ति अस्य। स्वातीनक्षत्रस्य मन्त्रः-

[15] **व्वायुरग्ग्रेगायज्ज्ञप्प्रीःसाकंगन्मनसायज्ज्ञम्। शिवोनियुद्भिः शिवाभिः।**

अस्य नक्षत्रस्य देवता वायुरस्ति।

**प्रतिष्ठोपनयोद्वाहवस्त्रसीमन्तभूषणम्। विवादश्चेभकृष्यादिक्षौरकर्म समीरभे।**

अत्र प्रतिष्ठा-उपनयन-उद्वाह-वस्त्र-सीमन्तादीनि कार्याणि क्रियन्ते।

षोडशस्थानमस्ति विशाखानक्षत्रस्य। शक्राग्निविषाग्नीन्द्राग्निद्वीषराधेत्यादीनि नामानि सन्ति अस्य नक्षत्रस्य। विशाखानक्षत्रस्य मन्त्रः-

[16] **इन्द्राग्नीऽआगत गुं सुतंगीर्भिर्नभोवरेण्यम्। अस्य पातं धियेषिता।**

**उपयामगृहीतोऽसीन्द्राग्नीभ्यान्त्वैश ते योनिरिन्द्राग्निभ्यां त्वा।।**

अस्य देवता इन्द्राग्नौ स्तः। वस्त्रभूषणवाणिज्यरसधान्यादिसंग्रहम्। इन्द्राग्निभेनृत्यगीतशिल्पलेखनकर्मयत्। अर्थात् वाण्ज्यिार्थे, रसधान्यादिसंग्रहार्थे, नृत्यगीतादिकार्यार्थे, शिल्पीलेखनादिकरणार्थे च विशाखा नक्षत्रस्य ग्रहणं कर्तुं शक्यते। सप्तदशस्थानमस्ति अनुराधानक्षत्रस्य। मित्रेत्यादीनि नामानि सन्ति अस्य। अनुराधानक्षत्रस्य मन्त्रः-

[17] **नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृत गुं सपर्यत ।**

**दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्यायश गुं सत।**

अस्य देवता मित्रः अस्ति। प्रवेशस्थापनोद्वाहव्रतबन्धाष्टमंगलम्। वस्त्राभूषणवास्तुश्च मैत्रभे सन्धिविग्रहम्।। अर्थात् प्रवेशस्थापनादिनीनिकर्माणि, उद्वाहव्रतबन्धनादीनि सन्धिविग्रहादीनि कर्माणि च अनुराधा नक्षत्रे क्रियन्ते।

अष्टादशस्थानमस्ति ज्येष्ठानक्षत्रस्य। इन्दशक्रवासवाखण्डलपुरन्दरादीनि नामानि सन्ति अस्य। ज्येष्ठानक्षत्रस्य मन्त्रः-

[18] **त्रातारविन्द्रमवितारमिन्द्र गुं हवे हवे सुहव गुं शूरमिन्द्रम्।**

**ह्वयामि शक्रं पुरुहूतमिन्द्र गुं स्वस्ति नो मघवाधात्विन्द्रः।**

अस्य नक्षत्रस्य देवता इन्द्र अस्ति।

**क्रूरोग्रशस्त्रवाणिज्य-गोमहिष्यम्बुकर्म च। इन्द्रभे नृत्यवादित्रशिल्पलोहाश्मलेखनम्।**

अर्थात् क्रूरसंज्ञकानि, उग्रसंज्ञकानि, वाण्ज्यिादीनि कर्माणि अस्मिन् नक्षत्रे क्रियन्ते। एकोनविंशस्थानमस्ति मूलनक्षत्रस्य। निर्ऋतिरक्षाम्रपादीनि नामानि सन्ति अस्य। मूलनक्षत्रस्य मन्त्रः-

[19] **मातेवपुत्रम्पृथिवी पुरीष्यमग्नि गुं स्वेयोनावभारुखा ।**

**तां वैश्वदेवैर्ऋतुभिः संविदानः प्रजापतिः विश्वकर्मा विमुंचतु।**

अस्य देवता निर्ऋति अस्ति।

**विवाहकृषिवाणिज्यदारुणाहवभेषजम्। निर्ऋतिभे नृत्यशिल्पसन्धिविग्रहलेखनम्।**

अर्थात् विवाहादीनि, कृषिसंबंधीनि, दारुणकर्माणि, सन्धिविग्रहादीनि कार्याणि च मूलनक्षत्रे कर्तुं शक्यन्ते। विंशस्थानमस्ति पूर्वाषाढ़ानक्षत्रस्य। जलनीरउदकाम्बुतोयेत्यादीनि नामानि सन्त्यस्य नक्षत्रस्य। पूर्वाषाढानक्षत्रस्य मन्त्रः -

[20] **अपाघमप किल्विषमपकृत्त्यामपोरपः। अपामार्गत्वमस्मदपदुः स्वपन्य गुं सुव।**

अस्य देवता क्षीरमुदकं वर्तते। अस्मिन् यानि कृत्यानि तानि पूर्वाफाल्गुन्यामुक्तानि सन्ति। एकविंशस्थानमस्त्युत्तराषाढ़ानक्षत्रस्य। विश्वेविश्वेदेवादीनि नामानि सन्त्यस्य। उत्तराषाढानक्षत्रस्य मन्त्रः-

[21] **विश्वेऽअद्य मरुतो विश्वऽउतीविश्वेभवत्यग्नयःसमिद्धाः।**

**विश्वे नो देवाऽअवसागमन्तु विश्वमस्तुद्रविणं व्वाजोऽअस्मै।**

अस्य नक्षत्रस्य देवता विश्वेदेवौ स्तः। अस्मिन् यानि कृत्यानि तानि उत्तराफाल्गुन्यामुक्तानि सन्ति।

द्वाविंशस्थानमस्ति श्रवणनक्षत्रस्य। गोविन्दविष्णश्रुतिकर्णश्रवः इत्यादीनि नामानि सन्ति। श्रवणनक्षत्रस्य मन्त्रः-

[22] **विष्णोरराटमसिविष्णोः श्नप्त्रेस्थो विष्णोः स्युरसिविष्णोर्ध्रुवोसि। वैष्णवमसि विष्णवेत्त्वा।** अस्य नक्षत्रस्य देवता विष्णुरस्ति।

**प्रतिष्ठाक्षौरसीमन्तयानोपनयनौषधम्। पुरग्रामगृहारम्भविष्णुभे पटबन्धनम्।**

अर्थात् प्रतिष्ठाकार्याणि, क्षौरकर्माणि, औषध्यादीनि कर्माणि श्रवणनक्षत्रे कर्तुं शक्यते। त्रयोविंशस्थानमस्ति धनिष्ठानक्षत्रस्य। वसुश्रविष्ठेत्यादीनि नामानि सन्त्यस्य। धनिष्ठानक्षत्रस्य वेदमन्त्रः-

[23] **वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्।**

**देवस्त्वासविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः।**

अस्य नक्षत्रस्य देवताः वसवः सन्ति।

**वस्त्रोपनयनक्षौरप्रतिष्ठायानभूषणम्। वसुभे वास्तुसीमन्तप्रवेशास्त्रविभूषणम्॥**

उक्तानीमानिकार्याणि अस्मिन्नक्षत्रे क्रियन्ते।

चतुर्विंशस्थानमस्ति शतभिषानक्षत्रस्य। वरुणापांपतिजलेशनीरेश इत्यादीनि नामानि सन्त्यिस्य। शतभिषानक्षत्रस्य मन्त्रः -

[24] **वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो।**

**वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद।**

अस्य देवता वरुण अस्ति।

**प्रवेशस्थापनक्षौरमौंजीबन्धनभेषजम्। अश्वारोहणसीमन्तवास्तुकर्म जलेशभे।**

अत्र अश्वारोहणादीनि कर्माणि सम्पाद्यन्ते। पंचविंशस्थानमस्ति पूर्वाभाद्रपदस्य। अजपादाजचरणाजांघ्रि इत्यादीनि नामानि सति। पूर्वाभाद्रपदनक्षत्रस्यवेदमन्त्रः -

[25] **उतनोहिर्बुध्न्यः श्रृणोत्वजेऽएकपात्पृथिवीसमुद्रः।**

**विश्वेदेवाऽऋतावृधो हुवाना स्तुतामन्त्राः कविशस्ताऽअवन्तु।** नक्षत्रस्यास्य देवता अजैकपद अस्ति।

षड्विंशस्थानमस्ति उत्तराभाद्रपदस्य। उत्तराभाद्रपदनक्षत्रस्य वेदमन्त्रः-

[26] **शिवोनामासि-स्वधितिस्ते पिता नमस्तेऽअस्तु मामाहि गुं सीः ।**

**निवर्तयाम्यायुषेऽद्यायप्रजननायरायस्पोषाय सुप्रजास्त्वाय सुव्वीर्याय।**

अस्य देवता अहिर्बुध्न्य अस्ति। सप्तविंशस्थानमस्ति रेवतीनक्षत्रस्य। पूषान्त्यपौष्णेत्यादीनि नामानि सन्ति रेवती नक्षत्रस्य। रेवती नक्षत्रस्य मन्त्रः -

[27] **पूषन् तव व्रते वयन्नरिष्येमकदाचन। स्तोतारस्तऽइहस्मसि।** पूषा देवता विद्यते।

**विवाहव्रतबन्धाश्च प्रतिष्ठायानभूषणम्। प्रवेशवस्त्रसीमन्तक्षौरभेषजमन्त्यभे॥**

अत्र विवाहसंबंधीनि, व्रतबन्धसंबंधीनि, प्रतिष्ठासंबंधीनि कर्माणि सम्पाद्यन्ते। सर्वेषां नक्षत्राणां संबंधः वेदमन्त्रेण सह विद्यते अतो हेतो नक्षत्राणां वेदमूलकता विद्यते।

**सन्दर्भः**

1. शुक्लयजुर्वेदः 20.80।
2. शुक्लयजुर्वेदः 37.11।
3. शुक्लयजुर्वेदः 15.21।
4. शुक्लयजुर्वेदः 13.03।
5. शुक्लयजुर्वेदः 34.21।
6. शुक्लयजुर्वेदः 16.01।
7. शुक्लयजुर्वेदः 25.23।
8. शुक्लयजुर्वेदः 26.03।
9. शुक्लयजुर्वेदः 13.06।
10. शुक्लयजुर्वेदः 19.36।
11. शुक्लयजुर्वेदः 34.36।
12. शुक्लयजुर्वेदः 33.33।
13. शुक्लयजुर्वेदः 33.30।
14. शुक्लयजुर्वेदः 21.20।
15. शुक्लयजुर्वेदः 27.31।
16. शुक्लयजुर्वेदः 07.31।
17. शुक्लयजुर्वेदः 04.35।
18. शुक्लयजुर्वेदः 20.50।
19. शुक्लयजुर्वेदः 20.61।
20. शुक्लयजुर्वेदः 35.111
21. शुक्लयजुर्वेदः 18.31।
22. शुक्लयजुर्वेदः 5.21।
23. शुक्लयजुर्वेदः 1.03।
24. शुक्लयजुर्वेदः 4.36।
25. शुक्लयजुर्वेदः 34.53।
26. शुक्लयजुर्वेदः 3.63।
27. शुक्लयजुर्वेदः 34.41।

- पौरोहित्यविभागाध्यक्षः, निदेशकः- पौरोहित्यप्रशिक्षणपाठ्यक्रमः
श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

# वर्तमानकाले वैदिकयज्ञानाम् आवश्यकता

- डॉ. बि.वेङ्कट लक्ष्मीनारायणः,

भारतीयसंस्कृतेः प्राणभूताः वेदाः । भारतीयो धर्मः भारतीयं दर्शनम् अध्यात्मम्, आचारः, व्यवहारः, रीतयः, नीतयः, विज्ञानं कला चेति सर्वेऽपि विषयाः वेदाश्रिताः एवेति विदितपूर्वं समेषाम् । जीवनस्य साहित्यस्य च न कोऽपि प्रसङ्गः एवं वर्तते यस्य बीजं वैदिकवाङ्मये नोपलभ्येत। भारतीयसभ्यताया आधारभूमिर्वेद एवेति कथनं नात्युक्तिर्भवेत्।

वेदस्योपदेशः सार्वलौकिकः सार्वभौमश्च वर्तते। सर्वं भेदभावं परित्यज्य मनुष्यो यथा मनुष्यो भवेत् तदर्थं वेदो "मनुर्भव मनुर्भव" इत्युपदिशति । अद्य मानवता पाश्चात्यसंस्कृतेः संसर्गेण लुप्तप्रायेव प्रतीयते। अहर्निशं मानवाः स्वार्थसाधनसंलग्नाः मानवतां विस्मृतवन्तः । एवं विधेः आधुनिककाले वेदेषु प्रतिपादितानां वैदिकयज्ञानाम् आवश्यकता अतीव वर्तते।

श्रुतिर्वानित्यम्, भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति, वेद एव द्विजातीनां निःश्रेयसकरः परः, वेदाद्धर्मो हि निर्बभौ, धर्मः जिज्ञासमानानां प्रमाणं परमश्रुतिः इत्यादिप्रमाणानि विमर्शनात्मदृष्टौ अवलोकिते सति अपौरुषेयानादि-स्वतःप्रमाण-नित्य-निर्दुष्टयुक्तानां वेदानाम् आवश्यकताम् अवगन्तुं शक्नुवन्ति। धर्मः वेदादेव आविर्भूतः इति च वक्तुं शक्यते । धर्मो हि जगतः प्रतिष्ठा, सर्वं धर्मे प्रतिष्ठति, धर्मो रक्षति रक्षितः इत्यादिप्रमाणैः ज्ञायते यत् धर्म एव सकललोकस्य आधारभूतः इति। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् इति गीतोक्त्याधारेण यज्ञ-दान-तप- दैवपूजादिसत्कार्याणि जीवने अतिमुख्यानि।

वैदिकधर्माचारणे अतिमुख्यं कार्यं नित्यनैमित्तिककार्याणि च भवन्ति यज्ञयागादयः। पूर्वं अग्निहोत्र-होम-हवन-सवन-यज्ञादीनां निर्वहनं नित्यनैमिककार्यक्रमः आसीत्। यज्ञानामाधारेण ज्ञान-भक्ति-दैवप्रसादस्वीकरणद्वारा मोक्षफलप्राप्त्यर्थमेव एतान् कार्यक्रमान् आचरन्ति स्म। एतेषु यज्ञयागादिषु भस्मीभूतभिः सेन्द्रियवस्तुभिः उत्पाद्यमानकृमिनाशकपदार्थाः रोगकारकाणूनां नाशनं कृत्वा पर्यावरणं प्रदूषणरहितं कुर्वन्ति स्म। पर्यावरणेऽस्मिन् जनाः अपि अरोग्यवन्तः दृढकायभूताः च भवितुम् अवकाशपराः। येषु यज्ञयागादिषु केवलं सेन्द्रियपदार्थानामेव उपयोगः भवति स्म। परन्तु यागादिषु उपयुज्यमानवस्तूनां वैज्ञानिकतां याज्ञिकाः न लक्षितवन्तः । अतः एव ते वैज्ञानिकतायाः विषये प्रचारं न कृतवन्तः।

यज्ञयागादिषु घृत-क्षीर-पिष्टक-ओदन-गुड़-फल-नारिकेलादीनि विविधानि वस्तूनि उपयुज्यमानानि भवन्ति स्म। अधुनिकतायाः अभिवृद्धौ सति एतेषामुपयोगः व्यर्थः इति, यज्ञयागादयः पाम्परिकमूढविश्वासाः इति च केचन निरस्ताः । परन्तु एताः भावनाः असमीचीनाः इति यागादीनां प्रयोगः अतीवोपकाराय इति कतिचन प्रयोगैः विज्ञातः। रसायनपदार्थेभ्यः उत्पद्यमानप्रदूषणस्य निवारणं सेन्द्रियपदार्थानुपयुज्य क्रियमाणयागाः एव इति।
**यज्ञेषु उपयुज्यमानवस्तूनि**- यज्ञयागादिषु भस्मीभूतपदार्थाः काष्ठानि अश्वत्थ-पलाश-मत्ति-श्रीगन्ध -देवदारु-आम्र-पनस-तिन्त्रिणि-अर्जुन(साल)-शमी-बदरि-अर्कादयः। अन्यानि गोमलं, घृतं, नवनीतं, क्षीरादयः, नवधान्यानि, नारिकेलं, पिष्टकं, अन्नं, गुढः, सुगन्धद्रव्यानि इत्यादीनि सर्वाण्यपि सेन्द्रियपदार्थाः एव भवन्ति। एतादृशानां पदार्थानां यज्ञयागादिषु दहनक्रियाकरणेण विविधरसायनिकप्रतिक्रियाः भूत्वा अनेकक्रिमिनाशकध

ूमादयः उत्पद्यमानाः भवन्ति। यासु प्रतिक्रियासु फार्माल् डिहैड् ($HCH_O$), एनिटाल् डिहैड् ($CH_3CH_O$), असिटिक् आसिड् (CH3COOH), आलाल् डिहैड् ($CH_3OH$), असिटोस् ($CH_3C_OCH^3$), फिनोल् ($C_3H_6OH$)इत्यादयः अनेके हैड्रोकार्बन्स् उत्पन्नाः भवन्तीति। एतानि सर्वाण्यपि क्रिमिनाशकतत्त्वयुक्तानि एव। एतान् विषयान् केचन वैज्ञानिकाः अपि अङ्गीकृताः सन्ति। यज्ञयागादिषु उत्पद्यमानरसायनपदार्थाः केवलं क्रिमि-कीटकानामेव नाशनम्, अपि तु दीर्घकालिकविविधरोगान् अपि दूरीकुर्वन्ति। यज्ञकुण्डात् आगम्यमानगन्ध -धूमादिभिः सूक्ष्माणवः मानवस्य देहं प्राप्य नेत्र-शिर-उदर-त्वगादिरोगान् निवारयितुं साहाय्यं कुर्वन्ति।

अधुनापि आयुर्वेदवेद्यविधिषु भस्मचिकित्साविधिरपि दृश्यते । तत्र भस्मं यज्ञयागादिद्वारा संगृह्णन्ति। अस्थिगतरोगाय ट्यूबर्क्यूलोसिस्, नेत्ररोगाय अमृतकाण्डम् उपयुज्य होमकरणेन लाभः सञ्जायते। नागकेसरि-लवङ्ग-एला-मरीच-अश्वगन्ध-देवदारु इत्यादीनां मन्त्रपूर्वकं यागं कृत्वा तत् भस्मं प्रतिदिनं सेवनेन श्वासकोश-उदर-पाण्डु-अजिर्णादिरोगानां निवारणं कर्तुं शक्यते।

तथैव पर्यावरणपरिरक्षणयुक्ताः विविधरसायनादीनाम् उत्पादनाय एते यज्ञयगादयः उपयुक्ताः भवन्ति। पूर्वकाले यज्ञयागादयः कतिपयदिनानि यावत् प्रचलन्ति स्म। यज्ञसमाप्तिं यावत् याज्ञिकाः आदिनं यावत् उपविश्य मन्त्रोच्चारणम्, तथैवोपविष्टासनाद् भ्रमणं च न भवति । तेन देहधारुढ्यमपि संवर्धते स्म। पदार्थानां व्यर्थीकरणाय एव यज्ञयागादीनां निर्वहनमिति न मन्तव्यम्। अत एव कालभेदं विना यागादीनां निर्वहनं पर्यावरण-स्वास्थ्य-धर्मादीनां संरक्षणाय अवश्यं भवेदिति आशंश्य विरमामि विस्तरात् ।

## उपयुक्तग्रन्थसूची

1. याज्ञवल्क्यस्मृतिः - विज्ञानेश्वरः - चौखाम्भा संस्कृत प्रकाशनम् - वाराणसी.
2. वैदिकवाङ्मयविवेचनम्- डॉ. कृष्णलालः - जे.पि.पब्लिकेशन् हाउस् - दिल्ली.
3. भारतीय संस्कृति - डॉ.प्रीति प्रभा गोयल, राजस्थानी ग्रन्थगार, जोधपूर.
4. वैदिकं रसायनविज्ञानम् - डॉ.सुन्दर नारायण झा -श्री.वे.वैदिकविश्वविद्यालयः, तिरुपतिः.

अतिथि-अध्यापकः, शिक्षाविभागः
राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः, लखनऊ.

# वेदेषु मानवाधिकारः

- डा.रुद्रनारायणनरसिंहमिश्रः

मानवाधिकारः शब्देऽस्मिन् द्वौ शब्दौ स्तः- मानवः अधिकारश्च। मनुशब्दात् 'अण्' प्रत्यये कृते सति 'मानवः' इति शब्दः निष्पन्नः, यस्यार्थो भवति मनुष्यः। अधिकारः शब्दोऽयम् अधि-उपसर्गपूर्वकं 'कृ' धातोः 'घञ्' प्रत्यये कृते सति उत्पन्नः, यस्यार्थो वर्तते कार्यभारः, आधिपत्यं, प्रभुत्वं, तथा च एषः अधिकारः मनुष्यं मानवनाम्ना अधिकारी भवितुं समर्थयति, अतः मानवाधिकारः सम्प्रति सांवैधानिकः, सामाजिकैः निर्णितश्च। मानवाधिकारशब्दोऽयं मानवीयतया सम्बद्धः। अयं मानवाधिकारः समग्रमानवजातेः हितसाधनाय उद्दिष्टः। मानवाधिकारः कस्यापि समाजस्य, राज्यस्य, धर्मस्य, व्यक्तिविशेषस्य च नैव विरोधं करोति, अपि तु एषां मध्ये विद्यमानसंकीर्णतां दूरीकरोति। मानवाधिकारः 'जीवस्य जीवाय च' इति सन्देशं प्रसारयति।

मानवाधिकारः मानवीयपक्षस्य संवेदना, सहयोगः, वैचारिकसम्प्रेषणम् इत्यादिभिः सह आधारितो वर्तते। तस्य सम्बन्धस्तु सभ्यसमाजस्य विकासेन समं भवति, यत्र मानवगरिमा, न्यायनिष्पक्षता, शोषणरहिता सामाजिकन्यायः इत्यादयः अधिकाराः निहिताः भवन्ति। एवं प्रकारेण मानवाधिकारसम्प्रत्यये ते सर्वे अधिकाराः सम्मिलिताः भवन्ति ये व्यक्तौ निहितानां मूलप्रवृत्तीनां विकासे आवश्यकाः सन्ति। मानवजीवने पारस्परिकसहयोग-सद्भावना-भ्रातृत्वभाव-प्रेम-नैतिकताद्याधारेणैव मानवाधिकारसंहितायाः विस्तारोऽभवत्, तथा च रीतिनीतिन्यायसम्बद्धानां विभिन्नानां मान्यतानां जन्म अभूत्। एतासु रीतिनीतिन्यायमान्यतासु एव मानवाधि कारः जीवति।

व्यापकार्थे मानवाधिकारस्य तात्पर्यं ताभिः परिस्थितिभिः पर्यावरणैश्च वर्तते, याः मानवं मानवस्वरूपे स्वीयास्तित्वं स्थापयितुं, व्यक्तित्वं विकासयितुं च यानि सौविध्यानि, नियमाश्च ईश्वर-प्रकृति-समाज-संविधानैः प्राप्यन्ते तत्सर्वं मानवाधिकारनाम्ना अभिज्ञायते। एतानि सौविध्यानि केवलम् ईश्वरप्रदत्तं जीवनं, प्रकृतिप्रदत्तानि वायु-अग्नि-जलादीनि, सामाजिकैः निर्मिताः रीति-नीति-प्रथाऽऽदयः, संविधानप्रदत्ताः विधयः नियमाश्च न सन्ति, अपि तु सम्मानपूर्वकं जीवितुं, रक्षितुं विकसितुं च एते सर्वे उपागमाः मानवस्य व्यक्तित्वविकासे अनिवार्यरूपेण सम्मिलिताः सन्ति। किञ्च सर्वेषु विषयेषु सर्वेषां मानवानां समानाधिकारः वर्तते। मानवाः परस्परं मूलवंश-धर्म- लिङ्ग-मत-वर्ग-राष्ट्र- स्थानादीन् आश्रित्य भेदभावं नैव कुर्युरिति। वैयक्तिकरूपेण मानवाधिकारः मानवगरिमायाः स्वतन्त्रतायाश्च अनुरूपं शारीरिक-नैतिक-सामाजिक-आध्यात्मिक-भौतिककल्याणेषु मानवस्य सर्वाङ्गीणविकासे च सहायकः भवति।

अत एव मानवहितप्रापकः मानवाधिकारः मौलिकाधिकारः, मूलाधिकारः, आधारभूताधिकारः, अन्तर्निहिताधिकारः, प्राकृतिकाधिकारः तथा जन्मसिद्धोऽधिकारः इति विविधनाम्ना अपि विश्वसमाजे प्रसिद्धः अस्ति।

भारतस्य प्राकृतिकपरिवेशे यादृशं जीवनयापनमौचित्यमावहति तथाविधमृषिभिः स्वानुभवैः प्रकाशितम्। लौकिकसाहित्येऽपि यद् ऋषिणामाश्रमाणां वर्णनं प्राप्यते तत्र न केवलं मानवाः अपि तु पशुपक्षिणोऽपि

पारस्परिकं वैरमपहाय सहिष्णुतया निवसन्त आसन्। संस्कृतवाङ्मयं मानवकर्तव्यमुपदिशति "रामादिवत् प्रवर्तितव्यं न रावणादिवत्" इत्याद्युक्तयस्तथ्यमिदं पुष्णाति। कर्तव्यमधिकारश्च एकस्यैव नाणकस्य पार्श्वद्वयमस्ति। अर्थात् कर्तव्यान् प्रति समर्पणभावेन अधिकाराः स्वतः एव प्राप्यन्ते रक्ष्यन्ते च। यथा कालिदासकृतस्य रघुवंशमहाकाव्यस्य चतुर्दशसर्गे तपोवनप्रेषितायाः सीतायाः सन्देशवाक्यम्–

**नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः।**
**निर्वासिताप्येवमतस्त्वयाऽहं तपस्विसामान्यवेक्षणीया।।** [1]

वस्तुतः भारतीयसंस्कृतिः मानवाधिकाराः कर्मप्रधाना च। यथोक्तम् ऋग्वेदे-

**गच्छन्ति देवाः स्वतन्त्रं न स्वप्नाय स्पृध्यन्ति। यन्ति प्रमादमतन्द्राः।।** [2]

अत एव वैदिककाले कर्माधिकारस्य महत्त्वं प्रदत्तम्। तस्मिन् समये जीवनस्य परमोद्देश्यं मोक्षप्राप्तिरेव आसीत्। तदर्थं वर्णाश्रमव्यवस्था कल्पिता। सेयं वर्णाश्रमव्यवस्था यथा मानवं स्वकर्मानुसारं पृथक् करोति, तथैव प्रत्येकं मानवस्य जीवनमपि ब्रह्मचर्यगृहस्थादि-चतुर्विधाश्रमरूपेण संविभक्तम्। अस्याः व्यवस्थायाः मुख्यं लक्ष्यं यत्तु सर्वे परस्परं सहकारेण जीवयन्तः धर्मार्थकाममोक्षाख्य-चतुर्विधपुरुषार्थं संप्राप्नुयुरिति। यतो हि ध र्मार्थकाममोक्षेषु प्रत्येकं मानवस्याधिकारः प्राचीनकाले भवति स्म। यथोक्तम् अधिकारपञ्चविंशतिकायाम् -

**धर्मार्थकाममोक्षाः यत् पुरुषार्थतयः मताः।**
**साधने मानवास्तेषां स्वभावादधिकारिणः।।** [3]

अधिकाराणामभावे कोऽपि मानवः न केवलं गरिमामयं जीवनं यापयितुं शक्नोति अपि तु सर्वाङ्गीणविकासमपि कर्तुं नैव समर्थो भवति। धर्मो विश्वस्य जगतः प्रतिष्ठा कस्यापि देशस्य सभ्यतायाः संस्कृतेश्च अभ्युन्नतिः तद्देशीयवाङ्मये निहिता मानवाधिकारप्रणालीमाश्रिता च भवति। मानवाधिकारप्रणाली च संस्कृतिमुपजीवति। भारतीयसंस्कृतिः संस्कृतभाषाऽऽश्रिता विद्यते। संस्कृतभाषायां विपुलं साहित्यं वर्तते। साहित्ये च वेदाः, ब्राह्मणग्रन्थाः, आरण्यकानि, उपनिषदः, वेदाङ्गानि, स्मृतयः, पुराणानि, महाकाव्यानि, नाटकानि इत्यादीनि समाहितानि भवन्ति। एतेषु सन्निहितानि तत्त्वानि मानवाधिकारविषयं प्रत्यक्षाप्रत्यक्षरूपेण जनयन्ति।

भारतस्य संस्कृतिः राजनीतिश्च अधुनाऽपि न्यूनाधिकरूपेण वेदेषु, धर्मसूत्रेषु, स्मृतिषु, अर्थशास्त्रेषु च दरीदृश्यते । मनुस्मृतिः भारतीयराजनीतेः सनातनसंहितायाः च आदरणीया वर्तते। मनुस्मृतौ मानवाधिकाराणां वर्तमानमान्यतानां बीजारोपणं दृश्यते एव। मानवाधिकारायोगः राष्ट्रविहीनव्यक्तीनां शरणगतिव्यवस्था तथा च तान् राष्ट्रसम्पन्नं कर्तुं वदति। मनुनाऽपि राष्ट्ररक्षाविषये उक्तम्-

**अलब्धमिच्छेत् चण्डेन लब्धं रक्षेदवेक्षया।**
**रक्षितं वर्धयेत् वृद्ध्या वृद्ध पात्रेषु निःक्षिपेत्।।**[4]

मानवविनाशस्य जनकः अधुनातनायुधानां प्रयोगः मानववंशं विनाशयति। तेषु प्रतिबन्धकृते नैके नियमाः कल्पिताः सन्ति। मानवानां जीवनरक्षासन्दर्भे एव ते प्रतिबन्धिताः वर्तन्ते। सन्दर्भेऽस्मिन् मनुस्मृतौ, महाभारते, रामायणे च प्रमाणानि मिलन्ति। यथा-

**न क्रूरैरायुधैर्हन्यात् युद्ध्यमानो रणे रपून्।**
**न कर्णिभिर्ताभि दिग्धैर्नाग्निर्ज्वलिते जनैः।।**[5]

**यत्तदधारे पाशुपतिः प्रादादस्र महन्मम।**

**कैरात् द्वन्द्वयुद्धे तु तदिदं भमिवर्त ते।।**[6]

**तमुवाय ततो रामो लक्ष्मण शुभलक्ष्मण।**

**नैक्सरु है तो रक्षाति पृत्थिं हन्य महर्षि।।**[7] इति।

मानवाधिकारविषया: वैदिकवाङ्मये बहुत्र वर्णिता: दृश्यन्ते। यथा यजुर्वेदे- "यत्र विश्वं भवत्येकनीडम्", "द्यौरिव भूम्ना पृथिवीव वरिम्णा" इत्यादिरूपेण निर्दिष्टा:। मानवीयताया:, सामूहिकताया:, सहकारिताया: समानतायाश्च भावना मानवाधिकारैरुत्पद्यते। यथोक्तम् अथर्ववेदे-

**सहृदयं सा मनस्य मविद्वेषं कृणोमि यः।**

**अन्यो अन्यमपि हर्यत वत्सं जाताभिवाहन्या।।**[8]

वेदेषु मानवाधिकार: मानवस्य समग्रतया समुन्नतये केन्द्रबिन्दु: वर्तते। यजुर्वेदस्य मुख्यत: कर्मकाण्डस्य विषयत्वात् पूर्ण मानवाधिकारविवेचनं प्राप्यते। व्यक्ते: हितमेव समाजस्य हितं भवति। सर्वे सुखिन: भवन्तु इति भावना प्रचारिता भवति मानवाधिकारै:। यथोक्तं यजुर्वेदे-

**तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखीभ्यः।**

**सतो वोधि श्रुधी वहमुरुष्याणो अधायतः समस्मात्त्।** [9]

तत्रैव मन्त्रान्तरेऽपि मानवस्य विचारशीलता कदाचिदपि नैव नष्टा भवतु, पुन: यो जन: दान-धर्महितोऽस्ति परधनापहरणे लोलुपोऽस्ति, परस्य हिंसा-द्रोहादिकर्मणि लिप्त: अस्ति तस्मात् जनात् न: पाहि। एतादृश: विचार: यजुर्वेदे वर्णित: यथा -

**मा नः शसो अररूषो धूर्तिः प्रणङ्मर्त्यस्य। रक्षाणो ब्रह्मणस्पते।।**[10]

वस्तुत: मानवाधिकारा: व्यक्तीनां सामञ्जस्यं स्नेहवृत्तिश्च सामाजिकसङ्घटनस्य आधारा: भवन्ति। परस्परं विवदमाना: क्वापि विषये नैकमत्यं गच्छेयुश्चेत्तत्रापि न कश्चित् निर्णय: सम्भवति। अत: जनानां हृदये भव्यकामना आवश्यकी। एषा भावना मानवाधिकाराणां पोषिका वर्तते। अनया समानताया: अधिकारस्य प्राप्तिर्जायते। भूमण्डले सर्वे जना: समाना: सन्ति। तेषु भेदभावस्य भावनाया: स्थानमेव नास्ति। यथोक्तम् ऋग्वेदे-

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।**

**समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि।।** [11]

**समानी व आकूतिः समाना हृदयानि वः।**

**समानमस्तु वो मनो यथा वः सुसहासति।।**[12]

**समानी प्रपा सह वोऽन्नभागः समाने योक्त्र सह वो युनज्मि।**

**सम्यञ्चोऽस्ति सपर्यतारा नाभि मिवाभितः।।** [13]

सर्वे मानवा: स्वतन्त्रा: सन्ति। कमपि जनं परतन्त्रताया: दासताया: वा स्थितौ नैव स्थापितुं शक्यते। प्रत्येकं मानव: अस्तित्वयुक्तो भवति। विधिदृष्टौ सर्वे जना: समाना: भवन्ति। सर्वेषां शिक्षाप्राप्त्याधिकार: वर्तते।

कस्यापि अनाधिकारः शिक्षाप्राप्तये नासीत्। यथोक्तं यजुर्वेदे-

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**

**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च।।**[14]

एवं च शिक्षां परिसमाप्य समावर्तनसंस्कारेण स्नातको भूत्वा जनः विवाहार्थं गृहस्थाश्रमं प्रविशति। मानवजीवनस्य द्वितीयोऽयं भागः। ज्ञानसमुत्पन्नः जनः गृहस्थे सामाजिकं पारिवारिकं च दायित्वम् अधिकारं निर्वोढुं समर्थो भवति। वेदेषु भावना एषा समुदेति यत् भूम्यां जन्म लभ्यमानानां सर्वेषामेकैव माता सा महनीया भूमिः। एवमेव एकस्याः मातुः जायमानत्वात् सर्वे परस्परं भ्रातर एव। तथ्यस्येतस्य उद्घाटनम् अथर्ववेदे दृश्यते- **माता भूमिः पुत्रोऽहं पृथिव्याः।** [15]

अत एवात्र न कोऽपि कनिष्ठः प्रत्युत सर्वे समाः वर्तन्ते। यथोक्तम् ऋग्वेदे-

**अज्येष्ठासो अकनिष्ठास एते सम्भ्रातरो वावृधुः सौभगाय।** [16]

एवमेव अथर्ववेदस्य एकस्मिन् स्थले वाक्स्वतन्त्रतायाः धर्मस्वतन्त्रतायाश्च रमणीयं चित्रं कृतमस्ति। तदनुसारं राष्ट्रस्य निवासिनः जनाः सुविधानुसारं कस्यामपि भाषायां वार्तालापं कुर्वन्तु, स्वेच्छया कमपि धर्ममनुसरन्तु। समग्रं राष्ट्रं स्वगृहमेव अवबोधयन्तु। परस्परं च सम्मिल्य राष्ट्ररक्षणं कुर्वन्तु। यथोक्तम्-**जनं बिभ्रति बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।**

**सहस्रं धारा द्रविणस्य मे दुहा ध्रुवेव धेनरनपस्फुरन्ति।।**[17]

मानवः जन्मना एव स्वतन्त्रतायाः अधिकारं प्राप्नोति। तस्य स्वतन्त्रतायाः आदरः सुरक्षा च सर्वैः जनैः स्वीकरणीय एव। यथोक्तम् अथर्ववेदे-

**यदजः प्रथमं स बभूव स ह तत्स्वराज्यमियाय। यस्मान्नान्यत् परमस्ति भूतम्।।**[18]

अधिकाराः प्रत्येकं मानवस्य कृते न्यायं दास्यन्ति। अधिकारातिक्रमणे न्यायप्राप्तेः सर्वेषामधिकाराणां विषये कठोपनिषदि उक्तम्-

**यथा पुरस्तात् भविता प्रतीत औद्दालिकारुणिर्मत्प्रसृष्टः।**

**सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात् प्रयुक्तम्।।**[19]

वैदिककाले समुदायसहितं स्वस्य कल्याणमपि सर्वोपरि आसीत्। येन व्यक्तित्वस्य उन्मुक्तः पूर्णविकासश्च सम्भाव्यते स्म। यथोक्तं यजुर्वेदस्य शान्तिपाठे-

**सत्यं बृहद् ऋतमुग्रदीक्षा तपो ब्रह्मयज्ञः पृथिवीं धारयन्ति।**

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**

**स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।**

वैदिककाले प्रत्येकव्यक्तेः धनार्जने, शासनक्षेत्रे, निर्वाचननेतृत्वसेवासु च भागं ग्रहीतुमधिकारः आसीत्। यथोक्तं यजुर्वेदे अथर्ववेदे च-

**प्रजापते न त्वदे तानन्यो विश्वा रूपाणि परि ता बभूव।**

**यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम पतयो रयीणाम्।।**[20]

**ऋतेन राजन्ननृतं विविञ्चन् मम राष्ट्रस्याधिपत्यमेहि।**

प्राचीनकाले स्वाभिमतं, कार्यनियोजनं, समकार्ये समवेतनं, विश्रामश्च इत्यत्र सर्वेषाम् अधिकारः आसीत्- **आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः। वासांसि मम गावश्च।**

**अन्नपपने च सर्वदा। ततो मे श्रियमावह। लामेशां पशुभिः सह स्वाहा॥**[22]

**सदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।**

**वृद्धिश्च न विचेष्टयति तामाहुः परमां गतिम्॥** [23]

जीवैर्जीवानां परस्परम् आयुर्विनाशः न विधेयः। सर्वास्वपि प्रजासु स एक एव परमेश्वरः ओतः प्रोतश्च विद्यते। सर्वे समाः सन्ति। ब्राह्मणक्षत्रियवैश्यशूद्राः सर्वेऽपि वर्णाः परस्परं रुच्या स्नेहेन च व्यवहरेयुः -

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।**

**रुचं विश्येषु शूद्रेषु मयिधेहि रुचा रुचम्॥** [24]

सर्वविधान् मानवान् प्रत्यादरभावः स्थापनीयः। सर्वविधं भेदभावं विहाय ये समाजे अधर्मवर्गीया-स्तक्षकरथकारकुलालकर्मरनिषाद-पुञ्जिष्ठमृगयुश्वपतिप्रभृतयस्तेऽपि समादरणीयाः सद्भावस्य च भाजनम्। यथा- **नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः।** [26]

इतोऽपि वैदिकसमाजव्यवस्थायां नारीणामपि समानाः अधिकाराः आसन्। समस्तमपि संस्कृतसाहित्यं नार्याः कृते सम्मानं समानाधिकारं सूचयति। वैदिकसमाजे नारी स्वातन्त्र्येण इतस्ततः प्रगच्छति स्म। सर्वे ते अधि काराः पुरुषमहिलानां कृते प्रायशः समानाः इव अवलोक्यन्ते। यथा- नारीणां शिक्षा, राजनीतिः, सामाजिकः, आर्थिकः, सांस्कृतिकः इत्यादिषु सर्वत्र समानाः अधिकाराः आसन्। तस्मिन् समये लैङ्गिकसमानता आसीत्। नारी सर्वोच्चं सम्राज्ञीपदं च लब्धुमर्हति। यथोक्तं प्रमाणेन अथर्ववेदे-

**यथासिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा।**

**एवं त्वं सम्राज्ञेधि प्रत्युरस्तं परेव्य च॥** [26]

जगत्यस्मिन् मानवः प्रकृतिसापेक्षः वर्तते। प्रकृतेरुपादानभूतानि यदा विकृतिं यान्ति तत्त्वानि तदा पर्यावरणं प्रदूषितं भवति। अनेन मानवस्य जीवनं स्वास्थ्यञ्च प्रभावितं भवति। अतः पर्यावरणसंरक्षणे सर्वस्य अधिकारोऽस्ति। अनेन मानवीयजीवनं सुखमयं जायते। अत एव वैदिकवाङ्मये बहुत्र पर्यावरणशुद्ध्यर्थमपि निराकरणीयानि स्वीकर्तव्यानि अधिकाराश्च निर्दिष्टाः। यथोक्तं यजुर्वेदे-

**मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥** [27]

**द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिः ब्रह्मशान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥** [28]

वैदिकवाङ्मये नियमावहेलनं न विधेयम् इत्यस्मिन् विषये तैत्तिरीयोपनिषदः शिक्षावल्यां निगदितमस्ति-**यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। एष आदेशोः एष उपदेशः॥**[29]

मानवाधिकारेषु परिगणितानि एतानि नूनमेव निखिलस्य जगतो महान्ति उपकारीणि। वस्तुतो समग्रेऽपि संस्कृतवाङ्मये मानवाधिकारसमुद्देशाः प्राप्यन्ते। वैदिककाले इमे मानवाधिकाराः नियमाश्च मानवव्यक्तित्वानुकूलाः अलौकिकैः महर्षिभिः प्रणीताः। अत एव वैदिककाले समाजव्यवस्थायां मानवाधिकाराः संरक्षिताः संवर्धिताश्च। तस्मिन् काले इमे मानवाधिकारसम्बद्धग्रन्थाः सर्वैरनिवार्यतः अध्येया आसन्। मानवं जीवनं तदानीं चतुराश्रमव्यवस्थानुगुणं चलति स्म। सर्वेषु आश्रमेषु स्वकर्तव्यमधिकारञ्च सम्पूर्य जनाः आत्मनः जननमरणाभ्यां मोक्षं प्राप्नुवन्ति स्म। स्वोच्चकर्मानुसारं सर्वे शिक्षां प्राप्तुं गुरुसमीपे अध्ययनाय गन्तुमर्हन्ति स्म। शिक्षाप्रदाने गुरोः एव सर्वोत्कृष्टं स्थानमासीत। गुरुशिष्यसम्बद्धः अत्युत्तमः आसीत्। ''आचार्यः पूर्वरूपम्, अन्तेवास्युत्तररूपम्, विद्या सन्धिः, प्रवचनं सन्धानम् इत्यधिविद्यम्'' इति तैतिरीयोपनिषद्वचः।

अत एव तस्मिन् काले वर्णाश्रमव्यवस्थानाम्ना मानवाधिकाराः मानवकर्तव्यानि च साधु न्यरूपिषत। अनया व्यवस्थया नागरिक-राजनैतिक-आर्थिक-सामाजिक-सांस्कृतिकख्रशैक्षिक-गणतान्त्रिकाधिकाराञ्च सम्यक् अभिज्ञायन्ते एव।

परन्तु कालक्रमेण उत्तरकाले जनानां जात्याधारेण विभिन्नक्षेत्रेषु शोषणं समारब्धम्। समाजव्यवस्था या वर्णाश्रमाधारिता आसीत्, तस्याः स्थाने जात्याधारेण समाजव्यवस्था स्वीकृता। अनेन भारतीयसमाजस्य महदकल्याणं जातम्। वर्णाश्रमव्यवस्थायाः मानवाधिकारसम्पन्नता संशयिता। ब्राह्मणानां प्रामुख्यं शिक्षाव्यवस्थायां सामाजिकदशायां च प्रभूतः अभवत्। ब्राह्मणेतरवर्णानां सर्वेषां जनानां विशिष्य शूद्रजनानां समानाधिकारः सर्वत्र नासीत्। सबलाः निर्बलानां शोषणं कुर्वन्ति स्म। तेषां कृते शिक्षायाः व्यवस्था नासीत्।

**सन्दर्भः-**

1-रघुवंशमहाकाव्ये सर्गः - 4
2-ऋग्वेदः 8-2-18
3-अधिकारपञ्चविंशतिः
4-मनुस्मृतिः
5-मनुस्मृतिः - 7-90
6-महाभारतम् - 12-19
7-रामायणम् - 37-80
8-अथर्ववेदः 3-30-1
9-यजुर्वेदः 3-26
10-तत्रैव 3-30
11-ऋग्वेदः - 10-199
12-तत्रैव 10-191-4
13-अथर्ववेदः - 3-30-6
14-यजुर्वेदः - 26-2
15-अथर्ववेदः - 12-1-12
16-ऋग्वेदः - 5-60-5
17-अथर्ववेदः - 12-1-45
18-अथर्ववेदः - 10-7-31
19-कठोपनिषद्- 1-11
20-यजुर्वेदः, 23/65
21-अथर्ववेदः - 10-24-5
22-तैत्तरीयोपनिषद् - 1-14
23-कठोपनिषद् - 2-3-10
24-यजुर्वेदः - 18-48
25-माध्यन्दिनसंहिता - 16-27
26-अथर्ववेदः - 14-1-43
27-यजुर्वेदः - 13-28
28-यजुर्वेदः - 36/9,14,17
29- तैत्तरीयोपनिषद्

अध्यापकः, शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.) लखनऊ-परिसरः, लखनऊ

# अथर्ववेदे मानवीयमूल्यानि

– डॉ० वीना विश्नोई शर्मा

वेदाः संस्कृतसाहित्ये स्वविशिष्टस्थानं स्थापयन्ति। वेदान् संस्कृतसाहित्यस्य आदिस्रोतः इति वक्तुं शक्यते। वेदो भारतस्य अमूल्यः मौलिकनिधिश्चास्ति। अस्मिन् ज्ञानस्य विशदभण्डारो वर्तते। अतो न केवलं भारतीयाः अपितु वैदेशिकाः अपि श्रद्धया सह नतमस्तका अवलोक्यन्ते। मानवमात्रस्य अभ्युदयस्य निःश्रेयस्य च अनेकैः कर्मभिः उपायैः विशुद्धाचरणेन आत्मज्ञानेन च एव अथर्ववेदस्य संहिता वैदिककार्याणां सामान्यजीवनस्य भव्यचित्रं प्रस्तुतं करोति। जीवनस्य समग्र प्रतिपादनं मानवीयव्यवहारस्य वर्णनात् सर्वथा प्रथग्भवितुं न शक्नोति। अतः अनेकेषु मन्त्रेषु मानवीयमनोभावानां, मानवीयमूल्यानां, संवेगानां मानवस्वभावस्य च विषये विचाराणि प्राप्यन्ते। यथा- **सत्यं प्रति निष्ठा असत्याद् घृणा –**

अथर्ववेदकालीनसमाजः अस्य विषयस्य कृते विशेष प्रयत्नशीलो आसीत् यत् तस्मिन् निवसतां जनानां व्यवहारः सत्यप्रधानः भवतु। इदं कारणमस्ति यत् अथर्ववेदे सत्यस्य विशिष्टमहत्वं स्वीक्रियते स्म। सत्यसमक्षे चौराः, कुम्भीलकाः हिंसकाश्च दुर्भावनायुक्ताः कदापि न तिष्ठन्ति स्म। एवमेव न अपितु सत्यनिष्ठव्यक्तिः यस्मिन् ग्रामे वसति तत्र दुष्टजनाः स्वदुष्टविचाराणामपि त्यागं कुर्वन्ति स्म। अतो अथर्ववेदः उपदिषति यत् सर्वे जनाः मिथः वार्तालापे सत्यवचनानामेव प्रयोगं कुर्वन्तु। अथर्ववेदे कामना कृतासीत् यत् व्यक्तिः नित्यप्रति सभासु प्रतिभागी भवतु तथा च तत्र सदैव सत्यसम्पन्नं भवतु। मनुष्याणां सत्यं प्रति निष्ठा भवेत्। विषये अस्मिन् तत्कालीनसमाजे ईश्वरस्य विशेषसहयोगः अपेक्षते स्म। अत्र इयं धारण व्याप्ता आसीत् यत् सत्यवक्तृणां रक्षां परमेश्वरः करोति तथा असत्यवक्तृणां विनाशमपि करोति स्म। अथर्ववेदे सत्यवचनकथनेन सत्येव उत्तमलोकानां प्राप्तिः भवति स्म। अतः तत्र जनान् प्रति उपदेशो अपि प्रद त्तः यत् ते आत्मानं सत्यं प्रति अर्पयन्तु। अथर्ववेदे सत्याचरणं व्यक्तेः आत्मन्नतौ अपि सहायकः मन्यते। –

**सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते।** [१]
**तयोर्यत् सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्।।**
**ये ते पाशा वरुण सप्त सप्त त्रेधा विषिता रुशन्तः।** [२]
**छिनन्तु सर्वे अनृतं वदन्तं यः सत्यावाद्यति तं सृजन्तु।।**
**प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते।** [३]
**प्राणो ह सत्यवादिनमुत्तमे लोक दधत्।।**

अथर्ववेदकालीनसमाजे असत्येन सह पापानां कल्पना कृतासीत्, यतोहि प्रायः इदमवलोक्यते यत् धार्मिकविश्वासेषु परिवर्धित जनः अस्य लोकस्य अपेक्षया परलोकधामम् अधिकम् अपेक्षते तथा पापाचरणेन नरकस्य प्राप्तिः सम्भवो अस्ति। अत एव व्यक्तिः स्वव्यवहारे असत्याद् दूरं निवासार्थं प्रयतति स्म। एवमेव न जनान् असत्याद् विमोचनार्थम् अथर्ववेदे इयमपि कल्पना कृतासीत् यत् ये जनाः असत्यं भाषयिष्यन्ति तान् ईश्वरः स्वहिंसकपाशेषु बन्धयिष्यति, तथा सत्यभाषिणं जनं विमोचयिष्यति। अथर्ववेदे स्पष्टमस्ति यत् ये जनाः क्रीडने च सभासु धनस्पृहया असत्यभाषणं कुर्वन्ति स्म। निश्चयेन दोषिनः भवति स्म। तं दूरीकरणार्थं व्यक्तिः ईश्वरं प्रति प्रार्थयति स्म। –

**दिवस्पृथिव्या अन्तरिक्षात् समुद्रादग्नेर्वातान्मधुकशा हि जज्ञे।** [४]
**तां चायित्वामृतं वसानां हृद्भिः प्रजां प्रति नन्दन्ति सर्वाः।।**

इयं धारणा तत्कालीनसमाजे व्याप्तासीत् यत् मनुष्येण उच्चारितासत्यम् अन्ततः व्यक्तिं विनाशयति-

**असद्भूम्यः समभवत्तद्यामेति महद्व्यचः।** [५]
**तद्वै ततो विधूपायत्प्रत्यक्कर्तारमृच्छतु।।**

उपर्युक्तविवेचनेन इदं तु स्पष्टमस्ति यत् तत्कालीनसमाजे असत्यं प्रति घृणाभावः आसीत् सममेव असत्यभाषी जनन्स जीवितमपि मृततुल्यं मन्यते स्म। असत्यभाषिनं कठिनाद् कठिनं दण्डप्रदाने अपि संकोचः नैव क्रियते स्म।

**गो पूजा -** गोपूजाविधानस्यापि प्रचलनं अथर्ववेदकालीनसमाजे आसीत्। प्रजासु गां प्रति विशेष स्नेहः आसीत्। गोपूजां कृत्वा सर्वाः प्रजाः सर्वे जनाश्च अत्यानन्दिता भवन्ति स्म। यथा देवेषु इन्द्रं श्रेष्ठः मन्यते स्म, तथैव गोषु वृषभं श्रेष्ठं मन्यते स्म। वृषभस्य विभिन्नावयेषु विभिन्न देवानां निवासः अपि मन्यते स्म।

उपर्युक्तविवेचनेन ज्ञायते यत् धर्मस्य प्रचारः तत्कालीनसमाजे जनसामान्ये पूर्णरुपेण व्याप्तमासीत्। वैदिकधर्मः यत्र-तत्र जनं सत्कर्मकरणार्थमेव प्रेरयति। वैदिकधर्मः कर्मश्रेष्ठतायाः परिचायक आसीत्।-

**सं वो गोष्ठेन सुषदा सं रय्या सं सुभूत्या।** [६]
**अहर्जातस्य यन्नाम तेना वः सं सजामसि।।**
**क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः।**[७]
**देवाः संगत्य यत् सर्वं ऋषभं व्यकल्पयन्।।**

**आत्मनोन्नतिं प्रति सजगता -** अथर्ववेदे आत्मोन्नतिविषयकानां प्रेरकप्रसंगानाम् अध्ययेन ज्ञायते यत् तत्कालीनसमाजः अमुं विषयं प्रत्यपि पर्याप्तप्रयत्नशीलः आसीत् यत् तस्मिन् समाजे निवासमानाः जनाः आत्मनोन्नतिं कुर्वन्तु, आत्मोन्नतेः त्रिसाधनानामुल्लेखः क्रियते- व्यक्तिः नित्यं सत्यम् आचरेत्, ज्ञानवान् भवतु, परमात्मनः विषये चिन्तयेत्। आत्मोन्नतजनाः तेजस्वी तथा अनन्तबलसम्पन्नोऽपि भवति स्म, यतोहि सत्यस्य निष्ठापूर्वकपालनेन तस्य आत्मिकबलं वर्धते स्म, अनेन स अनन्तात्मिकशक्तिम् अनुभवति स्म। एवम् अथर्ववेदकालीनसमाजे आत्मोन्नतजनाः जनसमूहस्य रक्षकः धारकश्च भूत्वा समाजे जातौ च श्रेष्ठः मन्यते स्म।। आत्मोन्नतव्यक्तिः स्वतेजसा द्युलोकं, अन्तरिक्षलोकं, सर्वान् प्रकाशमयलोकान् च स्वाधीनं करोति।-

**ऋधङ्मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः सुजन्मा।** [८]
**अदब्धा सुर्भ्राजमानः अहेव त्रितो धर्ता दाधार त्रीणि।।**

**परस्परमैत्र्याभावः -** अथर्ववेदकालीनसमाजः इदं न इच्छति स्म यत् व्यक्तीनां मिथः वैमनस्यभावेन समाजे केनापि विधिना द्वन्द्वभावः उत्पद्येत्, अतो अथर्ववेदस्य परस्परमैत्रीकरणार्थं स्पष्टोपदेशः वर्णितः अस्ति। अत्र वर्णितमस्ति यत् जनाः अपेक्षते यत् स मिथः मैत्रीभावेन सहैव व्यवह्रियेत्। तस्य हृदये प्रत्येकमनुष्यस्य कृते तथैव विशुद्धसौहार्दः भवेत्। यथा धेनोः उत्पन्नन्नवत्साय भवति। तत्कालीनसमाजः पारस्परिकमैत्रीभावस्य कृते सक्रियः आसीत्। परिवारः समाजस्य अन्वितित्वेन आसीत्परिवारेष्वपि मैत्रीभावेन सह निवासार्थम् उपदेशः प्राप्यते। एवं चेत् व्यष्टौ मैत्रीभावः वर्तते तर्हि समष्टिरपि स्वयमेव अनेन संयुक्ता भविष्यति।

**ज्ञानं प्रति जागृतिः -** तत्कालीनसमाजे व्यक्तिहृदये ज्ञानप्राप्त्यर्थमपि तीव्राभिलाषा आसीत्। स इच्छति स्म यत् तस्मिन्

ज्ञानस्य भण्डारो भवतु तथा चतर्थव संचितमपि भवतु, यथा मधुस्थाने मधुकीटाः मधु संचयन्ति। व्यक्तिः ज्ञानस्य कृते अश्विनौ प्रार्थयति स्म, स इदमपि इच्छति यत् तस्मै ज्ञानं स्वजनैरपि प्राप्येत्। तत्कालीनसमाजे ज्ञानप्राप्त्यर्थं कः अपि प्रतिबन्धो नासीत्। तेषु दिवसेष्वपि ज्ञानप्राप्त्यर्थम् इदमावश्यकं नासीत् यत् ज्ञानं मात्रोच्चजनेभ्यः एव प्राप्यते स्म यतोहि अथर्ववेदे इदं स्पष्टमस्ति यत् ज्ञानं निम्नजनेभ्यरपि प्राप्तुं शक्यते। अथर्ववेदकालीनसमाजे जनः ज्ञानं प्रति जागरूकामवलोक्यते। ज्ञानप्राप्तेः साधनं तपः मन्यते स्म, अनेन स्पष्टमस्ति यत् ज्ञानप्राप्त्यर्थं तपः वांछनीयं मन्यते स्म। वेदैरपि ज्ञानप्राप्तेरूल्लेख अथर्ववेदे प्राप्यते। तत्कालीनसमाजे ज्ञानस्य विशिष्टमहत्वं स्वीकुर्वन् कामना कृतासीत् यत् ज्ञानं मानवं रक्षेत्। अथर्ववेदे यत्र मनुष्यः ज्ञानप्राप्त्यर्थम् अतिप्रयत्नशीलो दृश्यते तत्रैव तस्य प्राप्तज्ञानस्य दुरुपयोगः न भवेत् तथा ज्ञानस्य सार्थकतां संस्थापयेत्।

**एकता –** जनेषु मिथः ऐक्यभावो भवेत्, ते संगठिताः भवन्तु तथा तेषु परस्परं विघटनं न भवेत्, अस्य कृते अथर्ववेदे स्पष्टोपदेशाः वर्णिताः। तत्कालीनसमाजे एकतायाः कृते समानतायाः वर्तमानता अनिवार्यं मन्यते स्म, अतो विषयः अस्मिन् विशेष बलं दीयते स्म, यत् समाजे संगठनस्येच्छुकाः सर्वे जनाः मनसा, वाचा, कर्मणा एकैव भवन्तु। मनुष्येषु उत्पन्नायाः ऐक्यतायाः संगठनभावनायाश्च व्यवस्थापनाय अनुशासनाय वा अथर्ववेदकालीनसमाजेन एकस्य नियन्त्रकस्य सत्तापि प्रसन्नमनसा स्वीकृतासीत्। तदर्थम् इदमप्यावश्यकं मन्यते यत् सर्वेषां वैचारिकानुकूलता तं भवेत्। मानवश्च मिथः विघटितः नाभवेत् नेतारः सहयोगं कुर्वन्तः बलं वर्धयन्त्विति।[९] अथर्ववेदे स्पष्टवर्णनं प्राप्यते यत् समाजस्य पुचवर्णानां सर्वांगीणविकासोन्नतिश्च संगठनेनैव संभवः अस्ति–

**ऋतून्यज ऋतुपतीनार्तवानुत हायनान्।**[१०]
**समाः संवत्सरान्मासान्भूतस्य पतये यजे।।**

**अद्रोहः द्यूतनिन्दाश्च –** अथर्ववेदकालीनसमाजे व्यक्तौ अद्रोहभावनायाः संचारो भवेत् अस्य कृते अद्रोहविषये विशेषबलस्य कल्पना कृतासीत्। तत्र स्पष्टमस्ति यत् मनुष्येण कामयते यत् स द्रोहरहितं भूत्वा आत्मानं रक्षेत्। [११] तत्कालीनसमाजे अस्य कृते स्पष्टोपदेशः दीयते सम यत् व्यक्तिः कस्मादपि न द्रुहृयेत्। चेत् अज्ञानवशात् द्रोहो भवत् तदा विषयः अस्मिन् ईश्वरं प्रार्थयित्वा क्षमा याचना क्रियेत्। तत्कालीनसमाजे कस्मादपि द्रोहाचरणं पापं मन्यते स्म– **ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम्।**[१२]

**एष मा तस्मान्मा हिंसीद् वेदः पृष्टः शचीपते।।**

अथर्ववेदकालीनसमाजे व्यक्तिना द्यूतक्रीडा अपि क्रियते स्म, परन्तु इयं क्रीडां समाजे आदरप्राप्ता न आसीत्, यतोहि द्यूतक्रीडकानां विनाशो भवन्तु, एतादृशी कामना अथर्ववेदे प्राप्यते। प्राप्तसंकेतैः ज्ञायते यत् सम्भवतः द्यूतक्रीडकानां समाजतः बहिः स्थापनाय पाशैः बन्धनं भविष्यत्येव। यतोहि तत्र स्पष्टवर्णनमस्ति यत् यथा विद्युतः वृक्षाणां विनाशयति तथैव पाशैः द्यूतक्रीडकान् बहि क्रियेत्। इदमपि कथितुं शक्यते यत् अथर्ववेदकालीनसमाजः द्यूतक्रीडायाः उन्मूलनार्थं सक्रियाः आसीत्।–

**यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वा युनक्तु।** [१३]
**इन्द्र उक्थामदान् यस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा।**
**प्रैषा यज्ञे निविदः स्वाहा शिष्टाः पत्नीभिर्वहतेह युक्ताः।।**

**यज्ञनिष्ठा –** अथर्ववेदाध्यनेन ज्ञायते तत्कालीनसमाजः यज्ञं प्रति पूर्णनिष्ठावान् आसीत्। यज्ञाः विभिन्नोद्देश्यानां पूर्तये क्रियते स्म। अथर्ववेदे वर्णितमस्ति यत् यज्ञाः सूर्योदये सत्येव सम्पाद्यते स्म। यज्ञे अग्नि, सविता, इन्द्र, वायु, मरुत,

अदिति, विष्णु, सोमादीनां अनेकेषां देवानां आह्वानं क्रियते स्म यत् सर्वान् देवान् अस्मिन् यज्ञस्थले आनयतु उचितस्थले च प्रापयतु। व्यक्तिः इदमपि स्म यत् देवाः यज्ञे आगत्य अन्नं स्वीकर्वन्तु, सोमरसं पिबन्तु च। व्यक्तिः दिन-पक्ष-मास-ऋतु-काल-संवत्सरेषु सर्वेषु कालेषु यज्ञं करोति स्म। देवमनुष्योश्च उभयोरेव यज्ञेन शुद्धौ भवति, एतादृशी धारण अपि तत्कालीनसमाजे व्याप्तासीत्। अग्नौ घृताहुतिप्रदानेन स्वर्गप्राप्तिः सम्भवा अस्ति इति मन्यते स्म-

**उत् त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो हरयस्त्वा वहन्ति।** [१४]

**तिरः समुद्रमति रोचसे अर्णवम्।।**

**यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु।।**[१५]

यज्ञसंपादनेन व्यक्तयः दीर्घजीविनः भवन्ति स्म, तेषां अनेकानि अनिष्टकराणिरोगाणि तथा राजयक्ष्मारोगमपि यज्ञेन विमुच्यन्ते स्म, यज्ञसंपादनेन यज्ञकर्तारः तेजस्विनः भवन्ति स्म। विषयः अस्मिन् अथर्ववेदे स्पष्टोल्लेखो क्रियते यत् यत्तेन मृतकाः स्वधारकबलं प्राप्यते तथा अमृतानां दीर्घायुः प्राप्यते।-

**यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु।** [१६]

**इन्द्र उक्थामदान् यस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा।**

**प्रैषा यज्ञे निविदः स्वाहा शिष्टाः पत्नीभिर्वहतेह युक्ताः ।।**

**ऋतून्यज ऋतूपतीनार्तवानुत हायनान्।**[१७]

**समाः संवत्सरान्मासान्भूतस्य पतये यजे।।**

उपर्युक्त विवेचनाधारे कथितुं शक्यते यत् अथर्ववेदकालीनसमाजस्य एका आदर्शसामाजिकव्यवस्था आसीत्। यस्यां मानवमूल्यानां पर्याप्त समावेशः आसीत्।

## सन्दर्भग्रन्थ सूची -


१.अथर्ववेद ८/४/१४ २.अथर्ववेद ४/१६/६ ३.अथर्ववेद ११/४/११
४.अथर्ववेद ६/१/१ ५.अथर्ववेद ४/१६/६ ६.अथर्ववेद ३/१४/१
७.अथर्ववेद ६/४/११-१५ ८.अथर्ववेद ५/१/१ ९.अथर्ववेद ७/६७/३.४
१०.अथर्ववेद ३/१०/६ ११.अथर्ववेद २/३५/२ ,१२/३/१३.१८
१२.अथर्ववेद ७/५४/२ १३.अथर्ववेद ५/२६/१.३.४ १४.अथर्ववेद १३/१/३६
१५.अथर्ववेद ५/२६/१ १६.अथर्ववेद ५/२६/१.३.४ १७.अथर्ववेद ३/१०/६


- गु० कां० वि० वि०, हरिद्वार

# उपनिषत्कालीनप्राचीनशिक्षाकेन्द्राणि

**डा. सन्तोष गोडरा**

उपनिषदां व्यवहारविषयकः पक्षो नितरां मनोभिरामः। दार्शनिकानि तत्त्वानि व्यवहारे प्रयुज्योपनिषद्विद्या मानवीयजीवनमतितरां रमयति इत्येतद्धि तदीयं ललितं वैशिष्ट्यम्। उन्नतं समृद्धञ्चाध्यात्मिकपदमारोढुं बहवः सद्गुणाः सन्त्यपेक्षिताः। अतः उपनिषदो मनोरमाख्यायिकां निधाय जनसमुदायं तान् सद्गुणान् वरीतुमुपदिशन्ति। आत्मसंयमतपोदानार्जवाहिंसासत्यादि सद्गुणाः जीवनं निःसन्दिग्धतया समुन्नयन्ति। तस्मात् ते उत्तमाः गुणाः उपनिषद्भिस्तथाऽऽलेखिताः, यद् अवलोक्य जनमानसं झटिति तान् स्वीकर्त्तुमुपक्रमते। तैत्तिरीयोपनिषत् "सत्यं वद, धर्मं चर" इत्यादिना, छान्दोग्योपनिषद् सत्यकामजाबालकथादिभिः, प्रश्नोपनिषद् अनृतनिन्दादिना, मुण्डकोपनिषद् सत्यश्लाघादिना संसारसन्मार्गं दर्शयन्ती हि केन न प्राप्यते ?

ज्ञानस्य सिद्धिर्विवेकवैराग्याधीना। ब्रह्मावाप्त्यर्थं तावज्जीवो न प्रवर्तते, यावत् तत्र विवेक- वैराग्ययोरुदयो न सञ्जायते। मुण्डकोपनिषद् एतद्गुणद्वितयं प्रत्येकं पुमान् गृहणीयादेतदर्थं पूर्णबलेन प्रयतमानास्ते। कर्मभिः प्राप्ता लोकाः सन्ति विनिश्वराः इत्येतद् विज्ञायैव ब्राह्मणस्य निर्विण्णतामुपैति। विवेको बोधयतीदं यत् कृतेन अकृतस्य समुपलब्धिर्न भवितुं शक्यास्ति।

कर्मानुष्ठाने प्राणी सर्वथा स्वतन्त्रोऽस्ति। उपनिषदामभिधानमिदं यज्जीवः कर्माचरणेऽस्ति स्वाधीनः। पुरुषः काममयोऽस्ति। यादृशी तदीयेच्छा भवति, तादृश एव तस्य सङ्कल्पो भवति। बृहदारण्यके प्रोक्तम्- अथो खल्वाहुः काममय एवायं पुरुष इति। स यथा कामो भवति तत्कर्तुर्भवति तत्कर्म कुरुते तदभिसम्पद्यते।

आत्मज्ञानलाभानन्तरमेव मानवः सर्वेष्वपि लोकेषु पर्यटितुं प्रभवति। स यत् कामयते तत् सङ्कल्पमात्रेण लभते। उपनिषदः पुरुषार्थोपदेशिकाः सन्ति। मुक्तिकोपनिषद् वक्ति-**"शुभाशुभाभ्यां वहन्ती मार्गाभ्यां वासना सरित्। पौरुषेण प्रयत्नेन योजनीया शुभे पथि। अशुभेषु समाविष्टं शुभेष्वेषावतारयेत्।।"**

मानवस्य कर्तव्यमस्ति यदसौ समुद्धर्तुं शुभवासनाभिः स्वकीयं मनो विभूषयेत्, न सः अशुभवासनासु निपतेत्। ताभिर्मनो भवत्यपवित्रं दूषितञ्च। 'ओम् यज्जाग्रतो दुरमुपैती' त्यादिभिर्मन्त्रैः श्रुतयो मानवं शिवसङ्कल्पशीलं स्वान्तं विधातुं प्रेरयन्ति।

श्रुतिषु बह्वीषु उपनिषच्छब्दः नैकवारं प्रयुक्तः उपलभ्यते। तैत्तरीयोपनिषदि द्वितीयतृतीयवल्ल्यन्ते इत्युपनिषत् इति पठ्यते। महानारायणोपनिषदि 62,63,64 मन्त्राणामन्ते इत्युपनिषत् इति उपनिषच्छब्दः श्रूयते। प्राचीनोपनिषत्सु यत्र उपनिषच्छब्दस्य सम्मुल्लेखः दृश्यते तत्र बहुत्र गुह्यः आदेशः, परं गुह्यम्। वेदगुह्योपनिषत्सु गूढम्, गुह्यतमम् सन्ति। एवं बहुषु सन्दर्भेषु एषा उपनिषद् विद्या अपात्राय न प्रदातव्या इति श्रूयते। छान्दग्योपनिषदः 'इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याच वान्तेवासिने', बृहदारण्यकोपनिषदः 'तमेतं नापुत्राय वाऽनन्तेवासिनो वा ब्रूयात्', श्वेताश्वेतरोपनिषदः 'नाप्रशान्ताय दातव्यं नापुत्रायाशिष्टाय वा पुनः', मुण्डकोपनिषदः 'तैषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' । अतः उपनिषच्छब्दस्य

रहस्यविद्या इति तत्प्रयोगसामर्थ्यात् सिद्ध्यति। यस्याः उपनिषद्विद्यायाः अभ्यासेन संसारबीजरूपा अविद्या विशरति, हिंसिता भवति तस्मात् उपनिषत्। अपि च यया विद्यया ब्रह्मसमीपं गच्छति तस्याः उपनिषदिति। एवं जननमरणरूपदु:खसमूहस्य सर्वथा शैथिल्यापादनेन अवसादनेन वा विद्यायाः अस्याः उपनिषदिति प्रयोगः। तस्मात् त्रिष्वपि अर्थेषु उपनिषच्छब्दः सार्थ एवं च शाङ्करभाष्यावतारणिकाभाष्ये उच्यते- उपनिषदि विद्योच्यते, तच्छीलिनां गर्भजन्मजरादि- निशातनात्तदवसादनाद्वा ब्रह्मणो वोपनिगमयितृत्वादुपनिषण्णं वास्यां परं श्रेय इति। तत्र उपनिषदः ब्रह्मविद्या इति मुख्यार्थः, ब्रह्मविद्याप्रतिपादकः ग्रन्थः इति गौणार्थः इति आचार्यशङ्करः शाङ्करभाष्ये तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छद्बो वर्तते। यथोक्तं भगवत्पादैः-

"य इमां ब्रह्मविद्यामुपनयन्ति आत्मभावेन श्रद्धाभक्तिपुरस्सरं सन्तः तेषां गर्भजन्यजरारोगादिवर्गं विनाशयति, परं वा ब्रह्म गमयति, अविद्यासंसारकारणं चात्यन्तमवसादयति, विनाशयति इत्युपनिषद् उपनि पूर्वस्य षादेरेवमर्थसंस्मरणात्"।

अविद्याविनाशः, ब्रह्मप्राप्तिः, जननमरणरूपदु:खसमूहस्य नाशः इति उपनिषद्विद्यायाः त्रिविधमप्युद्देश्यमेकस्मिन् अविद्यानाशे समन्वेति, अविद्यानाशेन अवशिष्टोद्देश्ययोः साहजिकपूर्तेः सम्भवात्। अगणनीयानेकानेकजन्मभ्यः प्राप्तायाः अविद्यायाः विनाशः इत्यतिमहत्त्वपूर्णमुद्देश्यं साधनीयञ्चेत् तद्विधिविज्ञानमपि तावदुत्कृष्टतमं स्यादिति निश्चप्रचम्।

उपनिषदो हि अध्यात्मविद्यायाः स्त्रोतस्वरूपाः। अध्यात्मप्रधानायां प्रस्थानत्रय्याम् अन्यद् द्वयं ग्रन्थरत्नं गीता ब्रह्मसूत्रं चेति द्वयमपि उपनिषदाश्रयमेव। उपनिषत्सु भारतीयतत्वाज्ञानां सात्विकचिन्तनस्य प्रायशः सकलोऽपि संग्रह समुपस्थाप्येत। उपनिषत्सु मुख्यत्वेन वर्णिताः विषयाः किं ब्रह्म, क ईश्वरः, जीवात्मनः किं स्वरूपं, कथं जगतः प्रादुर्भावः, मनसः किं स्वरूपम्, अध्यात्मेन किं साध्यते, कानि च मोक्षस्य साधनानि, निवृत्तिमार्गस्य का आवश्यकता, ज्ञानमार्गेण किं साध्यते इत्यादयः सन्ति। एतेषु एव विषयेषु मनस्तत्वमीमांसा दरीदृश्यते।

चेतनाबद्धं निखिलं जगत् विद्यते। चेतनामेवाधारीकृत्य सर्वं ज्ञानं विज्ञानं च शब्दब्रह्मणा प्रकाश्यते। मानवबुद्धिविनिर्मितेशास्त्रनिकरे मनोजगत् बहुधा व्याख्यातं वर्तते। परं साम्प्रतिकसन्दर्भे येनापि मतिमता मनीषिणा मनस्तत्त्वचिन्तने या प्रतिभा प्रकटिता तन्मूले उपनिषद्विद्यैव विभासते। उपनिषत्सु मनस्तत्वं यदाख्यातं तदेवाविकलतया सर्वाङ्गत्वेन मनस्तत्वविवेचनसंपृक्ताधिया धीमता समुदीरितम्। अद्यत्वे वैज्ञानिकयुगे मनोविज्ञानविद्वद्भिः मनोविषये यद् यद् महदूहनं क्रियते तत्सर्वं बीजत्वेन उपनिषत्सु प्रविद्यते।

औपनिषदिकसंस्कृतेः केन्द्रं याज्ञिकानुष्ठानमेवासीत्। सोमयज्ञ-राजसूययज्ञ-वाजपेययज्ञानाम् अनुष्ठानं तद्युगीनराजभिः कृतमस्ति। तदा आयोजितम् विद्वत्सम्मेलनं शिक्षायाः केन्द्रमासीत्।

स आजगाम जैबलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमार[3] इति स भोः इति।

उपनिषद्युगे पाञ्चालदेशीयः राजा प्रवाहणजैबलिः आसीत्। तस्य राज्ञः परिषत् शिक्षायाः महत्त्वपूर्णं केन्द्रमासीत्। श्वेतकेतुः पिता महर्षिः उद्दालक आरुणिः आसीत। पितुः एव सः अध्ययनमकरोत्। श्वेतकेतुः पितुः विद्याग्रहणानन्तरं पाञ्चालनरेशस्य प्रवाहणजैबिलिमहर्षेः परिषदं प्रति अगच्छत्। राज्ञा प्रवहणेन श्वेतकेतुः विद्याभिमानी अस्ति। तथापि अहङ्कारी अपि अस्ति। राज्ञा पूर्वमेव एतच्छ्रुतम्। ततः तस्य मनसि इयं भावना आगता यत् एनं विद्याभिमानिनं कुमारं, विनीतं, विनम्रं च करणीयमस्ति। अनेन कारणेन हे कुमार! वद इति कुमारशब्दस्य

प्लुतस्वरेण उच्चारणम् अकरोत्, यदुच्चारणं भर्त्सनाय कृतं भविष्यति। किं त्वं पितुः शिक्षा प्राप्ता? इति। श्वेतकेतुना उत्तरं प्रदत्तम् आमिति। तदा राज्ञा पञ्चाग्निविद्यासम्बद्धाः पञ्चप्रश्नाः पृष्टाः उद्दालक-आरुणिम्। किन्तु उद्दालक-आरुणिः एकस्यापि प्रश्नस्योत्तरं न दत्तवान्। लज्जितो भूत्वा उद्दालक-आरुणिः पितुः समीपमागत्य पृष्टवान् यत् भवता उक्तम् यत् मह्यं सर्वाः विद्याः पाठिताः। अपि च सर्वासां विद्यानां शिक्षा प्रदत्ता। किन्तु राजन्यबन्धुः मां पञ्चाग्निविद्यासम्बद्धान् पञ्चप्रश्नान् पृष्टवान्। अहं तु एकस्यापि प्रश्नस्योत्तरं दातुं समर्थो नासम् इति। एतत्सर्वं श्रुत्वा उद्दालक-आरुणिनोक्तं यत् हे तात ! मया यत् ज्ञातं तत्सर्वं तुभ्यं दत्तम् इति।

अनेन ज्ञायते यत् पित्रा स्वकीयं सम्पूर्णज्ञानं पुत्राय प्रदत्तमिति, तस्मिन् काले पितैव औपचारिकशिक्षायाः प्राम्भिकगुरुरासीदिति।

**कैकेयराजस्य सभा-** तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः संजिहान... यक्ष्यमाणो वै भगवन्तोऽहमस्मि यातवदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति। ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तँ हैव वदेदात्मानमेवेमं वैश्वानरँ संप्रत्यध्येषि तमेव नो ब्रूहीति।

वैश्वानरात्मनः विशेषज्ञाता कैकेयराजा अश्वपतिः आसीत्। तस्य राजसभापि शिक्षायाः केन्द्रमासीत्। प्राचीनशाल-औपमन्यव, सत्ययज्ञपौलुषि-इन्द्रद्युम्न-भाल्लवेय-जनशार्कराक्ष्य-बुडिल आश्वतराश्वि-उद्दालक-आरुणि-इत्यादयः महाशाल, महाश्रोत्रिय-विद्वांसः एकत्रिताः भूत्वा वैश्वानरसंज्ञकस्य आत्मनः वेत्तु राज्ञः अश्वपतेः कैकेयस्य समक्षं ज्ञानप्राप्तये समागताः स्म। अश्वपतिराज्ञा प्रत्येकमृषेः पृथक्तया यथायोग्यं सत्कारं कारयितवान्। ततः प्रातः ऋषिभ्यः उक्तम् यत् हे पूज्यगण! अहमपि यज्ञं करोमि। अहम् एकैकस्य ऋत्विजः यावत् धनं ददामि तावदेव भवद्भयोऽपि ददामि। भवन्तः अत्रैव वसन्त्विति। परन्तु ऋषिभिः नाङ्गीकृतम्। उक्तञ्च यत् वयं धनायात्र न समागताः। अस्माकमागमनस्य प्रयोजनं भिन्नं विद्यते। इदानीं केवलं भवानेव वैश्वानरात्मनः वेत्ता अस्ति। भवतः वैश्वनरात्मनः उपदेशं प्राप्तुं वयमत्र समागताः। अस्मान् उपदिशन्तु। ततः ते ऋषयः राज्ञः वैश्वानरात्मनः ज्ञानमवापु- ते ऋषयः।

ऋषिसंस्थानम्-अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रीतमात्मानं वैश्वानरमध्यति तँ हन्ताभ्यागच्छामेति। तँहाभ्याजग्मुः। उपनिषद्युगीनशैक्षणिकसमाजे राजर्षि-महर्षि-देवर्षि-ब्रह्मर्षयः समस्त-विशिष्टविद्यानां वेत्तारः आसन्। एतेषां तत्त्ववेत्तानाम् ऋषीणां स्वस्यैव शिक्षणसंस्थानानि आसन्। तत्र महर्षिः उद्दालकः आरुणिः सतः तत्त्ववेत्ता आसीत्। एवं प्रकारेण उपनिषद्कालीनानि प्राचीनशिक्षाकेन्द्राणि मया वर्णितानि।

सन्दर्भः-

1. बृहदारण्यकोपनिषद्- 4/4/5
2. मुक्तिकोपनिषद्
3. तैत्तरीयोपनिषद्-9 अनुवादक
4. महानारायणोपनिषद्-62,63,64
5. छान्दग्योपनिषद्-3/5/2
6. कठोपनिषद्-3/17
7. श्वेताश्वेतरोपनिषद्-5/6
8. मैत्रायणी उपनिषद्-6/21
9. छान्दग्योपनिषद्-3/11/5,6
10. बृहदारण्यकोपनिषद्-6/3/12
11. श्वेताश्वेतरोपनिषद्-6/12
12. मुण्डकोपनिषद्-3/2/10
13. 5-3-1
14. 5-11-5,6
15. 5-11-4
16. 6-2-1

अतिथि-अध्यापिका, शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.वि.) श्री रणवीर-परिसरः, जम्मू काश्मीर

# निरुक्तानुसारेण षड्भावविकारविमर्शः

– डॉ० ममता मेहरा

मन्त्रार्थानवबोधनार्थे वेदप्रतिपादितानां निगूढ़ार्थानां प्रकाशनार्थे च आचार्ययास्ककृत निरुक्तग्रन्थः अतीवमहत्ववान् वर्तते। अस्मिन् ग्रन्थे नामाख्यातोपसर्गनिपात- प्रभृतयः चत्वारः पदजातानां, 'जायतेऽस्तिविपरिणमते वर्धतेऽपक्षीयते विनश्यतीति' षड्भावविकाराणां, विविधशब्दस्यनिर्वचनानां च विस्तृतरूपेण वर्णनं प्राप्यते। एतेषामपि षड्भावविकारविमर्शप्रसङ्गे सर्वप्रथमं नामाख्यातस्य लक्षणस्वरूपविचारं आवश्यकमस्ति। भावस्य प्राधान्यं यस्मिन् वर्तते तद् आख्यातम् एव। सत्वस्य प्राधान्यं यस्मिन् वर्तते तन्नाम इति कथ्यते। यथोक्तं यास्कमुनिना निरुक्ते- 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि।'[१] नाम तु जातिविशेषः यथा-स्त्रीपुंनपुंसकं नाना सुबन्तादि च। अथ भावो किमर्थः? भावना उत्पादना। सा च असत्वभूतो धाात्वर्थोऽत्र गृह्यते। तथोक्तं हरिणा-'धात्वर्थो भावना सैवोत्पादना सैव च क्रिया।'[२] इति। आख्यातं किमर्थं? आख्यायन्ते क्रियागुणभावेन वर्तमानानि स्त्रीपुंनपुंसकानि अनेनेत्याख्यातम्। अथ पुनः यस्मिन् वाक्ये एते नामाख्यातौ उभे शेषः तत्र भावस्यैव प्रधानं वर्तते। निरुक्ते तस्य लक्षणं प्रथमोक्तम् नाम्नः तु अनन्तरम्। सर्वाणि नामानि आख्यातजानि अत एव आख्यातस्य प्रथमोक्तिः समीचीना। वाक्ये हि आख्यातं प्रधानं तस्य चिकीर्षितत्वात्। उक्तं च-आख्यायते प्रधानं भावेन क्रिया (भावः)। भाव-काल-कारक-संख्याश्चत्वारोऽर्था आख्यातस्य। तेषां मध्ये भावस्य प्रधानता भवति। अतो भावप्रधानमाख्यात-मित्युक्तम्। नाम्नोऽपि सत्त्व-द्रव्य-संख्या-लिङ्ग मित्येते चत्वारोऽर्थास्तेषां मध्ये सत्त्वं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तम्।

भावस्य अवस्थाद्वयं प्रसिद्धम्-साध्यावस्था सिद्धावस्था च। साध्यावस्था भावस्य अपूर्णावस्था भवति यत् आख्यात इति कथ्यते-साध्यत्वेनाभिधीयमाना क्रिया उच्यते।[३] अपि च सिद्धावस्थास्ति भावस्य सम्पूर्णावस्था। आख्यातो नाम पचति-पठति इत्यादीनि तिङ्न्त पदानि। क्रियायाः आरम्भादस्य परिसमाप्तिपर्यन्तं यदवस्था वर्तते तत् 'आख्यात्' पदेन प्रतिपादितमस्ति। उदाहरणतया-'गंगां व्रजति' इति वाक्येन व्रजति इति गमनक्रिया। इयं क्रिया चलन् तिष्ठन्, पिबन्, पृच्छन् इत्यादीनां बह्वीनां क्रियाणां समाहाररूपः यावत् गंगातटः न प्राप्यते तावत् इति गमनक्रियान्तर्गते एव परिगणितम्। गंगातटप्राप्तिपश्चादेव अन्याक्रियायाः पृथक् अस्तित्त्वं भवति। अत एव गृहत्यागात् आरभ्य गंगातटप्राप्तिपर्यन्त- समस्तक्रियाः आख्यात् पदवाच्याः। एवमनेकक्रियाभिर्निर्वृत्यमानो भावो आख्यातेनोच्यते इति सिद्धम्। उक्तं च तथा- **क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव।**

**क्रियाभिर्निर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः।।** [४]

यत् भावः अस्तित्वमात्रं उच्यते तत् सामान्यभावस्य वाचकः। यथा- भवति, अस्ति इत्यादयः। एवञ्च यत् विशेषण-विशेषभावो सूच्यते कथ्यते वा, तत् विशेषभावस्य वाचकः। यथा-पठति, व्रजति, उपविशति इत्यादयः। अर्थात् 'भवति' इति पदं भावस्य अवस्थाविशेषः यत्र पाक, पाठादि क्रियायाः विशेषधर्मान् सम्मिश्रणं न उपलभ्यते। सर्वक्रियाप्रसवबीजभूतं इयमेव 'भवति' पदम्।

दार्शनिकदृष्ट्यापि पुनः भावः उभयात्मा इति उच्यते कार्यात्मा कारणात्मा भेदात्। उपरिवर्णितं स्वरूपम् अस्य कार्यात्मास्वरूपं कथ्यते। तदनन्तरं कारणात्मा– भावस्य लक्षणं कृतं यत् प्रलयकाले क्रियां द्रव्यञ्च स्व-स्वविशेषणं परित्यज्य कार्यात्मानं तीर्त्वा अविशिष्टरूपेण अवस्थितं जातम्। स आत्मभावः कथ्यते स च कारणात्मा। अपरं तु जगत् स्थितिकाले एव द्रव्यगुणकर्मभावेनावस्थिताः सन्तो नामाख्यातोपसर्गनिपातैरभिधीयन्त इति। इदं परिवर्तनं एव 'विकार' शब्देन गृह्यते। लक्षणविदो गृह्णन्ति यत् भवतेः स्वपदार्थे भवनं भावः इति। तस्य विकाराः भावविकाराः। ते षड्प्रकारकाः सन्ति वार्ष्यायणिः आचार्यानुसारेण। उक्तं च निरुक्ते-'षड्भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति।' यथा मानवशरीरस्य बाल्य-यौवन-वार्द्धक्यादि विविधावस्थाः परिगणिताः तथैव भावोऽपि षड्प्रकारेण विकारग्रस्ताः संजायते। एवं च यदा भावः विकृतो जातः तदा तस्य प्रत्येकविकारे इमा एव षड्वस्थाः उपलभ्यन्ते यत् जायते, अस्ति (सत्वं) विपरिणमन्, वृद्धिः अपक्षयः विनाशश्चैवोच्यते। अतो अन्ये भावविकाराः ऐतेषामेव विकाराः भवन्ति न तु ते पृथक् सन्तीति।

तदेतेषां जन्मादीनां भावविकारशब्दानां मध्ये कः कस्यां विकारावस्थामवस्थितं भावमाचष्टे, कं वा विद्यमानमपि नाचष्टे कं वा न प्रतिषेधतीति अग्रे विस्तारपूर्वकं विवक्षामि। 'जायते' इति प्रथमभावविकारस्य विषये उक्तं यास्कमुनिना यत्– 'जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधयति।' अस्याभिप्रायोऽस्ति यत् जन्यवस्तुः यदा उत्पन्नोमभूत् तदा एव तस्य अस्तित्वोत्पद्यते, किन्तु उत्पत्तेः पूर्वमपि तस्य सत्ता अवश्यमेव विद्यमानमस्ति। कारणमुक्तं यदुत्पत्तेः पूर्वं यदि तस्य विद्यमानत्तां न स्वीकुर्मः तदा केन प्रकारेण तस्य उत्पत्तिः सम्भवा? कार्यं तु स्वकारणे उत्पत्तेः प्रागपि विद्यमानमस्ति एतद् दार्शनिकानामभिमतम्। यदि अस्तित्वं न उपलभ्यते तदा 'जायते' इति व्यवहारः कुतः सम्भवः? यदि 'जायते' इति क्रियायाः स्थाने 'अस्ति' इति व्यवहारं कथ्यते तदाऽपि इदं न समुपलभ्यते। यस्य सत्ता पूर्वमेव प्राप्यते अर्थात् यः पूर्वमपि 'अस्ति' इति प्रयोगेण अस्तित्ववानस्ति तस्य 'जायते' इति क्रिया प्रयोगेण पुनरुत्पत्तिः न संभवा। एतन्निवारणार्थे एवोक्तं यत् कश्चित् वस्तुनामादिक्रियायाः प्रारम्भमात्रकथनार्थे 'जायते' इति प्रयुज्यते। तत्र न अस्तित्वस्य प्रतिषेधमस्ति न च तस्य स्वीकृतिः। उदाहरणमुक्तं-घटनिर्माणसमये तस्य जन्मावस्था भवति, तस्मिन् समये 'जायते' इति व्यवहारः समुचितः। किन्तु निर्माणकार्यमध्येऽपि काचित् घटस्वरूपस्य प्राप्तिः संजातः, तथापि 'घटोऽस्ति' इति वाक्यं न कथ्यते। सा अवस्था घटनिर्माणस्य अपूर्णावस्था। अत एव घटनिर्माणकार्यसमाप्तिपर्यन्तमेव 'घटो जायते' इति भावविकारः समीचीनः। तत्र न अपरभावस्य स्वीकारोक्तिर्न प्रतिषेधं च उपलभ्यते। अत एव अस्तित्वं नाचष्टे-अपरिपूर्णत्वात् अपि च अस्तित्वस्य प्रतिषेधं च न करोतीत्यर्थः। उक्तं च यास्कमुनिना भाष्ये- जनिः पूर्वोभावः ब्रूतं ते नेति प्रतिषेधे न परोभावः अपरभावः तं न ब्रूते। न प्रतिषेधति। अस्तित्वस्य न प्रतिषेधं करोतित्यर्थः।

तदनन्तरं 'अस्तीति' द्वितीयभावविकारः प्रवर्तते, यत्-'अस्तीत्युत्पन्नस्य सत्वस्यावधारणम्' इति। सत्वस्य निश्चयात्मकस्थितिः एव तस्य अवधारणम्। स एव 'अस्ति' इति शब्देन ब्रवीति। भाष्ये यास्काचार्येणोक्तं यत् 'अस्तीति जातस्य सत्वस्यावधारणमात्रं ब्रवीति।' अत्र मात्रशब्देन एकमेव निश्चयात्मकावधारणम् अस्तित्वमात्रं संकेतितम्। अस्ति इति भावविकारः न अग्रिम विपरिणमन् क्रियायां स्वीकरोति अपूर्णत्वात् न च तस्य प्रतिषेधं करोति उपस्थितित्वात्। व्याख्यायते यत् सर्वप्रथमं प्रथमभावविकारावस्था 'जायते' इति परिपूर्णयते, तत्पश्चात् उत्पस्यमानः सत्तारूपभावविकारः सम्प्राप्यते, तदा 'घटोऽस्ति' 'पटोऽस्ति' इत्यादयः व्यवहाराः प्रचलिताः सन्ति

अर्थात् तस्य विद्यमनता 'अस्ति' इति पदेन सुस्पष्टः जातः। समस्तपूर्वापरभावाः स्वकारणे क्षणमात्रे अथवा अत्यन्तसूक्ष्मकालपर्यन्तम् अवस्थिताः भवन्ति। तदनन्तरं तृतीयक्षणे विलीयन्ते। अपरभावविकारोऽपि पूर्वभावस्य स्थितिक्षणे गर्भे विधीयमानमस्ति। तस्य तृतीयक्षणे तु आत्मलाभं करिष्यति। इदं तस्य अपरभावस्य द्वितीयक्षणं कथ्यते। अथ विपरिणमन् इति तृतीयभावविकारः उच्चते यत् 'विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम्।' अस्य भाष्यं क्रियते-'विपरिणमत इत्येष शब्दोऽप्रच्यवमानस्य तत्त्वादप्रभ्रश्यमानस्य विकारं विक्रियामात्रं ब्रवीति। न वृद्धेरर्थमाचष्टे। न प्रतिषेधति।' विपरिणमते इति परिवर्तनसूचकः। एष परिवर्तनमेव सशर्तः। स्वस्वरूपस्य तत्त्वाद् अप्रच्यवमानस्य विकारमात्रं 'विपरिणमते' इति कथ्यते। अप्रच्यवमानस्य अर्थोऽस्ति स्वस्वरूपान् न अवमानं अर्थात् स्वस्वरूपात् अधोगति/अवनति अत्र न स्वीक्रियते। स्वस्वरूपेण ऊर्ध्वगमनं एवात्र विकारशब्दस्याभिप्रायोऽस्ति। किंतु वर्द्धनभावक्रियारूपतृतीयभावविकारः अत्र न स्वीकरोति। स्पष्टीकरणं प्रस्तौमि यत् तृतीयभावविकारः 'विपरिणमन्' इति द्वितीयसत्ताभाव-'अस्ति'-विकारस्य लयसूचकः। अपि च 'विपरिणमन् भावविकारस्य द्वितीयक्षणं (पूर्णप्रकटीकरणं) सूचकः। किञ्चित् वस्तुः शरीरं वा यदा एकाऽवस्थायां पूर्णसत्तायां प्राप्यते, तदा तस्य वृद्धिः आवश्यकी। किन्तु तस्य वृद्धिः तावत् सम्भवा नास्ति यावत् तद् वस्तुः स्वविद्यमानऽवस्थाम् न परित्यज्यति। विद्यमत्तावस्थाम् परित्यज्य एव किमपि वस्तुः शरीरीं वा वृद्धिं प्राप्तुं शक्यते। अत एव वृद्धेरर्थाय स्वविद्यमत्तावस्थायाः परित्यजनेव 'विपरिणमन्' नामको तृतीयभावविकारोच्यते। एतेषां गर्भे हि वृद्धिनामको चतुर्थभावविकारो क्रमेण स्वपूर्णतायां गम्यते। अतः वृद्धेरर्थस्य अव्यक्तरूपमेव विपरिणामः।

अथ 'वर्धते' इति चतुर्थभावविकारः वर्णयते यत्-'वर्धत इति स्वा ाभ्युच्चयं सांयौगिकानां वार्थानाम्।' वर्धते इति एष शब्देन द्विप्रकारकं वर्धनं कथ्यते। प्रथमं-स्वेषामत्तनां यथा शिरोग्रीवाबाहूदरादीनां अभ्युच्चिततां कथ्यते। द्वितीयं तु संयोगजनितानां अर्थानां यथा-हिरण्यधान्यादीनामभ्युच्चयं ब्रवीतीति। यथोक्तं यास्कमुनिना-'वर्द्धते विजयेनेति वा, वर्द्धते शरीरेणेति वा।' 'वर्धते' इति चतुर्थभावस्य द्वितीयो क्षणः अपि च तृतीयो 'विपरिणमन्' भावविकारस्य तृतीयो क्षणः। 'विपरिणामः' विलयं जातः एतत् क्षणे अपि च वृद्धिः विकारस्य पूर्णावस्थितिः संजातः। अयमेव क्षणः 'वर्धते' इत्याख्यात् पदेन कथ्यते। अस्य स्थितिकाले पञ्चमो भावः 'अपक्षयते' इति गर्भेण प्रादुर्भूतो जायते। तात्पर्योऽस्ति यत् वृद्धिना सह अपक्षयस्य सूत्राणि अपि प्रसरते एवञ्च वृद्धेः कालगतो भूत्वा एव अपक्षयं (क्षीणत्वं) पूर्णरूपेण प्रकटीभूतो जायते। अतएव अत्र 'वर्धतः' इति नापक्षयमाचष्टे अपूर्णत्वात् नापि तं प्रतिषेधति उपस्थितत्वात्। अथ पञ्चमभावविकारः अपक्षीयते इति उक्तं यत्-अपक्षीयते इत्येतेनैव व्याख्यातः प्रतिलोमम्। 'यथैव हि स्वात्तैः सांयौगिकैर्वा द्रव्यैरुपचीयते, तथैवापक्षीयते।' इति भाष्ये। वृद्धेः प्रतिलोममपक्षयः। प्रतिगतं लोमं प्रतिलोमम्। अपक्षयः नाम पञ्चमविकारः वृद्धेः प्रतिलोमः। यथा अत्तनां प्रसारणे शरीरस्य वृद्धिः भवति तथैव अत्तनां ह्रासे शरीरस्य अपक्षयः जायते। अपक्षयस्य किं स्वरूपम्? विनाशो नाम्ना अपरभावस्य पूर्वरूपमात्रमेव अपक्षयो भावविकारस्य पूर्णावस्था। तत्रापि नाचष्टे अपरभावं, न वा प्रतिषेधति। विनश्यन् अपरभावं नाचष्टे अपूर्णत्वात् न च प्रतिषेधति उपस्थित्वात्।

अथ षष्ठः भावविकारः 'विनश्यति' इति उच्यते यत्- 'विनिश्यतीत्यपरभावस्यादिमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति। यथा 'जायते' इति प्रथम भावविकारस्य पूर्वे अन्येषां भावविकाराणामभाववशे केवलं 'जायते' इति पूर्वभावविकारशब्देन उच्यते तथैव 'विनश्यति' भावविकार-पश्चात् अन्यभावविकाराणामभाववशे, 'विनश्यति' इति

केवलं अपरभावस्यादिमाचष्टे। मध्ये समागताः- अस्ति, विपरिणमते, वर्धते, अपक्षीयते इति चतुःभावविकाराः पूर्वभावविकाराणामपरभावं कथ्यते अपि च परभावविकाराणां पूर्वभावमेवोच्यते। अत्तनां ह्रासः 'अपक्षयो' वा यदा स्वान् मर्यादान् परिपूर्णतां प्राप्यते, तदा नाशो एव अवशिष्यते। अयमेव 'विनश्यति' पदवाच्यः अपि च षष्ठभावविकारस्य स्थितिकालः, यो विनश्यतीति आख्यातपदेन ब्रवीति पूर्वपक्षीयादिभावं नाचष्टे न प्रतिषेधति-'विनाश एवापरभावस्तस्या- दिमाचष्टे।'

एते षड्भावविकाराः न स्वतन्त्राः अपितु परस्पराकांक्षाबद्धाः श्रृंखलाबद्धाः च सन्ति। अत एव उत्पन्नभूते प्रत्येकपदार्थे तेषामुपस्थितिः अनिवार्यतः विद्यमानाऽस्ति। अतः उत्पन्नभूतप्रत्येकवस्तुः किञ्चित् आयुष्मान् अस्ति अपि च तस्मै एतेषां षड्परिवर्तनानि उक्तक्रमेण अवश्यंभावी वर्तन्ते। 'जायते' 'अस्ति', 'विपरिणमते' 'वर्धते', 'अपक्षीयते', विनश्यतीति तस्य बोधकाः। उक्तषड्भावविकारातिरिक्तं तु अनेकानेकभावविकाराः संजायते। ते परस्परं तु भिन्नाः किन्तु तेषाम् सर्वेषामन्तर्भावः पूर्वोक्तषड्भावविकारान्तर्गते एव भवति। अतः पूर्वोक्त षड्भावविकाराः एव स्थिराः न न्यूनाधिक्यं सम्भवं तेषां संख्यकानाम्। अतः सम्यकोक्तं निरुक्ते-अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह। 'अतो भावविकारषटकाद्येनऽन्यत्वेन भावविकारा लक्ष्यन्ते, न ते पृथक् सन्ति।' इति भाष्ये। उदाहरणतया यथा-जनिशब्दवाच्यो निष्पद्यते, अभिव्यंज्यते इति अनेकप्रभेदाः। अस्तिशब्दवाच्योऽनेकेः प्रभेदाः अनेकपर्यायवचनानि च सन्ति-अस्ति, विद्यते, भवतीत्येवम्। विपरिणमते इति शब्दवाच्यो विपरिणमते जीर्य्यति इति। वर्धतिशब्दवाच्यो वर्धते, पुष्यति, उपचीयते इति। अपक्षीयति शब्दवाच्यो धवस्यति, भ्रश्यतीत्येवमादि। विनश्यतिशब्दवाच्यो विनश्यति, म्रियते, विलीयत इत्येवमादि। तदविषये उक्तं निरुक्ते-'ते यथावचनमभ्यूहित्याः' 'ते जन्यादिशब्दवाच्याः विकाराः यथावचनमवस्थिताः सन्तः प्रकरणोपपत्तिभ्यामभ्यूहितव्या ज्ञातव्या इत्यर्थः' इति भाष्ये। अर्थात् एते जन्यादिशब्दवाच्या विकाराः वचनमतिक्रम्य पूर्वोक्तप्रकारेणैव अवबोधितव्याः। यथावचनस्याभिप्रायो स्पष्टीकृतं यत् ये यस्मिन्वचनेऽवस्थिताः सन्ति ते प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रति अभितो वितर्क्याः 'प्रयुज्यमाना' भवति इति वाक्यशेषः। उदाहरणार्थे 'निष्पद्यते' इति भावविकारः 'जायते' इत्यस्य भावविकारस्य स्वरूपवानोऽस्ति। 'पुष्यति' इति वर्धते इत्यस्य भावविकारस्य स्वरूपवान् भवति एवमेव तु अन्यैः ग्रहीतव्यः।

अत एव मूलतः षट् एव तु भावविकाराः भवन्ति। शेषाः तु एतेषाम् अवान्तरभेदाः पर्यायवाचिनः शब्दाः वा। 'इति ह स्म आह' इति वार्ष्यायणि आचार्यस्य मतमोद्घाटनार्थे प्रयुक्तम्। उक्ताः समस्तभावविकाराः येन प्रकारेण येन वचनेनावस्थितं जातं प्रकरणेयुक्तिभ्यां च मन्त्रार्थपरिज्ञानाय तथैव हि विजानीयादिति अभिप्रायः।

सन्दर्भः १. निरुक्त, अध्याय १/पाद १/खण्ड १, श्रीमुकुन्द झा शर्मा, पृ० ४. २. वहीं। ३.वहीं। ४.निरुक्त, अध्याय १/ पाद १/खण्ड १, श्रीमुकुन्द झा शर्मा. ४. निरुक्त १/१, श्री छज्जूरामषास्त्री, पृ० ५, ५. निरुक्त १/१, श्री छज्जूरामशास्त्री, पृ० ८. ५. निरुक्त १/१, श्री छज्जूरामशास्त्री, पृ० ८. ७. निरुक्त १/१ श्री छज्जूरामशास्त्री, पृ० ८
८. निरुक्त १/१, श्री छज्जूरामषास्त्री, पृ० ६. ६. निरुक्त १/१, श्री छज्जूरामशास्त्री, पृ० ६. १०. निरुक्त १/१, पृ० ६. ११. निरुक्त १/१, पृ० ६. १२. निरुक्त १/१, पृ० ६. १३. निरुक्त १/१, पृ० ६ १४. निरुक्त १/१, पृ० १०. १५. निरुक्त १/१, पृ० १०. १६. निरुक्त १/१, पृ० १०. १७. निरुक्त १/१, पृ० १०. १८. निरुक्त १/१, पृ० १०

का०हि०वि०वि०, वाराणसी

# मन्त्रार्थज्ञाने स्वरशास्त्रस्य महत्वम्

- चन्द्रेश उपाध्याय

वेदविद्यामर्मज्ञैर्मनीषिभिर्वेदशब्दो विविधिप्रकारैर्व्याख्यातोऽस्ति, तद्यथा-

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥**[1]

सायणाचार्येण प्रोक्तमस्ति-

**इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः।**[2]

अन्यत्राप्यनेनैव-अभिहितं वर्तते-

**अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनम्।**[3]

मनुस्मृतिर्भाष्ये मेधातिथिर्ब्रवतीति-

**विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थमस्मादिति वेदः।**[4]

स्वामिदयानन्दसरस्वती- विद् ज्ञाने, विद् सत्तायाम्, विद् लाभे, विद् विचारणे इत्यादिभिर्धातुभिर्वेदशब्दस्य निष्पत्तिमुदीरितवान्। एतन्मतेन विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विन्दन्ते लभन्ते, विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा ते वेदाः।[5]

ऋग्वेदे शुक्लयजुर्वेदे[6] अर्थवेदसंहिताया[7] चापि आद्युदात्तो वेदशब्दो ज्ञानार्थे प्रयुक्तोस्ति। श्रीमता ए.एम. रामनाथदीक्षितेन सामतन्त्रभूमिकायां विश्लेषितमस्ति यद् आद्युदात्तो वेदशब्दः श्रुत्यर्थे अन्तोदात्तश्च दर्भमुष्ट्यर्थे अभीष्टोऽस्ति।[8]

वेदतत्त्वपरिज्ञानाय नैकैर्भाष्यकारैर्भाष्यं प्रणीतमस्ति। स्कन्दस्वामि-उद्गीथवेणीमाधव- आनन्दतीर्थ-सायण-उवट-महीधरप्रभृतीनां बृहती भाष्यपरम्परा उपलभ्यते। शाकल्यकृतेन पदपाठेन मन्त्रार्थाध्ययनस्य आरम्भो जात इत्येवं कथयितुं शक्यते। शब्दनिर्वचनविधिना ब्राह्मणेष्वपि मन्त्राणामर्थज्ञानाय प्रयासो विहितोऽस्ति। ब्राह्मणमिश्रितासु कृष्णयजुर्वेदीयसंहितासु मन्त्रव्याख्यायाः सुष्ठु प्रयासोऽवलोक्यते। अत एव ब्राह्मणानि वेदव्याख्यानग्रन्था इत्येवं विद्वद्भिः स्वीकृतम्। तैत्तिरीयसंहिताभाष्ये आचार्यः सायणोऽभिधत्ते- यद्यपि मन्त्रब्राह्मणात्मको वेदस्तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपतत्वान्मन्त्रा एवादौ समाम्नाता।[9] इति।

निरुक्ते अनेकत्र 'इति ह ब्राह्मणम्' 'इति ह विज्ञायते' इत्येवं कृत्वा ब्राह्मणवचनान्युद्धृतानि सन्ति। परमनेकत्र ब्राह्मणेषु अनेकार्थका अतस्तु अस्पष्टार्थका असङ्गतार्था वा कथा उद्भावितास्सन्ति। अतस्तु मन्त्रगतपदानां प्रतीकार्थं सम्यग् विज्ञायैव मन्त्रार्थोऽवगन्तव्यः।

निरुक्ते शतपथब्राह्मणे धर्मशास्त्रेषु च आधिदैवत-अध्यात्म-आख्यानसमय-नैदान- नैरुक्त-याज्ञिक-ऐतिहासिक-परिव्राजक इत्येवं नैका मन्त्रार्थानुशीलनपरम्परा उल्लिखितास्सन्ति। स्कन्दस्वामि- उद्गीथाचार्य-वेङ्कटमाध वप्रभृतिभिर्याज्ञिकपद्धति मनुसृत्य ऋग्वेदभाष्यं प्रणीतम्। स्वरसन्ध्युच्चारणविध्यादि- ज्ञानपपुरस्सरं मन्त्रार्थज्ञानं

सविध्यवगतं स्यादित्येतदर्थं प्रातिशाख्यग्रन्थानां वैशिष्ट्यं स्मर्यते। एवमेव वेदार्थपरिज्ञानाय वेदाङ्गत्वेन पाणिनीयव्याकरणस्य महत्त्वं विशेषेणोल्ल्लेखनीयमस्ति। भट्टोजिदीक्षितेन पाणिनेर्वैदिकस्वर-सम्बद्धानां सूत्राणां कृते वैदिकस्वरप्रक्रियेत्येवं पृथक् स्थानं परिकल्पितम्।

मन्त्रव्याख्याया: शब्दनिर्वचनपद्धतेश्चरमोत्कर्षो यास्ककृते निरुक्ते संलक्ष्यते। अत्र ग्रन्थकारेणानेकेषां मन्त्राणां ब्राह्मणवाक्यानामपि यत्र तत्र व्याख्या विहितोऽस्ति। शतपथब्राह्मणे।[10] षड्विंशब्राह्मणे[11] च प्रयुक्तस्य 'जार' शब्दस्य निर्वचनमत्र द्रष्टव्यमस्त्येव-

**आदित्योऽत्र जार उच्यते। रात्रेर्जरयिता[12] इति।**

**एवं मन्त्रार्थज्ञानायं निरुक्तपद्धतिर्विशिष्टैका सरणिर्विद्यते।**

स्वरशास्त्रं भाषाशास्त्रस्याङ्गभूतम् । अतस्तु भाषाविशारदैरपि स्वरार्थयो: सम्बन्धे विमर्श: कृतोऽति। पदस्वरूपावबोधाय स्वरधर्माणां ज्ञानमावयकम्, अत एव वैयाकरणैरपि स्वरार्थसम्बन्ध: स्वराणां पदे स्थितिरित्येवं विषया आलोचिता:। अर्थनिर्धारणे उदात्तादिस्वरधर्माणापरिहार्या भूमिकाऽस्ति। महाभाष्यकारेण प्रोक्तमस्ति यद् व्याकरणशास्त्र एव स्वरसाहाह्येन पदस्वरूपं ख्यपयति। स्वरशास्त्रं व्याकरणस्याङ्गभूतमित्येवं प्रकल्पितमनेन। स्वामिनो दयानन्दस्य मन्तव्यमस्ति यद्वेदेऽतिसूक्ष्मं पदार्थविज्ञानमुपदिष्टमस्ति। तच्च स्वरज्ञानेन विनाऽवाप्तुं नैव शक्यते। वेदभाष्यकारो वेङ्कटमाधवोऽर्थविज्ञानदृष्ट्या स्वराणां शास्त्रीयं विवेचनं कृतवान्। 'ऋगर्थदीपिका' नामके ऋग्वेदभाष्ये वैदिकपदानां स्वरा विश्लेषिता अनेन। एवञ्च वेदार्थपरिज्ञानाय स्वरा विश्लेषिता अनेन। एवञ्च वेदापरिज्ञानाय स्वरज्ञानस्यापरिहार्यता प्रतिपादिता। पाणिनिनाऽऽचार्येण बहूनां पूर्वाचार्याणां नामनिर्देशो मतप्रकाशनं वा विहितमस्ति। इत्थमनुमीयते यदेतेषां वैदिकस्वरविवेचनसंवलिता: पृथक् पृथग्ग्रन्था अप्यासन् कालकवली- भूताश्चौते सम्प्रति नैवावलोक्यन्ते।

'उदक् च विपाश:'[13] पाणिने: सूत्रेऽस्मिन् व्याकृतमस्ति यद् विपाश: उत्तरस्मिन् तटे दत्तगुप्तप्रभृतिर्निर्मित: कूप आद्युदात्तस्वरविशिष्टो दात्त:, गौप्त इत्येवं व्यवह्रियते। स्म, दक्षिणतटवर्ती चान्तोदात्तस्वरलक्षितो दात्तो गौप्त इत्येवं ख्यापितोऽवर्तत। उद्धरणेनानेन सूच्यते यत्पूर्वं लोकभाषायामपि उदात्तानुदात्तादिस्वरविचारोऽक्रियत।

भरतमुनिना नाट्यशास्त्रे विविधरसानां निष्पत्तौ उदात्तादिस्वराणामुपयोगिता स्वीकृताऽस्ति। तद्यथा-

तत्र हास्यशृङ्गारयो: स्वरितोदात्तवर्णै: पाठ्यमुपपाद्यं वीरदौद्राद्भुतेषु उदात्तकम्पितै: करुणबीभत्स-भयानकेषु अनुदात्तस्वरकम्पितैरिति।[14]

वामनजयादित्ययो: काशिकाग्रन्थनिर्माणकालपर्यन्तं भाषायामपि उदात्तादिस्वरप्रयोग: प्राचलदित्येवं सज्जेर्तोऽस्मिन् ग्रन्थे प्राप्यते। परवर्तिकाले साहित्यकृद्भि: स्वकीयरचनास्वर्थनियामकस्वरधर्माणां भृशमुपेक्षा कृता। अवरोधकत्वेनाङ्गीकृत्य चैतेषां परिहारोऽपि कृत:। यथोक्तमस्ति मम्मटेन काव्यप्रकाशे-

**काव्यमार्गे स्वरो न गण्यत[15] इति।**

आचार्यो विश्वनाथोऽप्यभणत् साहित्यदर्पणे, यथा-

**स्वरास्तु वेद एव विशेषप्रतीतिकृत्।** [16]

एवं शनै: शनैर्भाषायां स्वरधर्माणां प्रचलनं विलुप्तं जातमिति स्पष्टं प्रतिभाति। कालक्रमाद् यज्ञानुष्ठानप्रवृत्तिरद्य लुप्तप्रायाऽस्ति। प्राक्काले तु यजनकर्मणि सस्वरो मन्त्रोच्चारणमवश्यमेव विधीयते स्म। नारदीयशिक्षायां स्वरहीनमन्त्रोच्चारणमनष्टाकारकम् उक्तमस्ति। तदेवं यथा-

**प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते।**
**यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून् ॥**[17]

पाणिनीयशिक्षायामपि निर्दिष्टमस्ति–

**मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥**[18]

स्वरोच्चारणविधिमुल्लङ्घय अभीष्टाऽवाप्तिर्नैव कर्तुं शक्यत इत्येवं सङ्केतितं स्फुटमेवात्र। शतपथब्राह्मणमपि मन्त्रार्थसिद्ध्यर्थं सस्वरमुच्चारणमुपदिशति। यथा–

**वाचि स्वरमिच्छेत्। तया स्वरसम्पन्नयाऽऽर्जित्वज्यं कुर्यात्। तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव।**[19]

पश्चात्तु स्वरमन्त्रोच्चारणकाणमृत्विजजामभावे यज्ञकर्मण्येकश्रुतिस्वरपाठस्य विकल्पो विहित इति वस्तुस्थितिरेवं स्वीक्रियते।

मन्त्रार्थज्ञानेनापि स्वराणां स्वरूपज्ञानं सम्यगुच्चारणं चापीष्येते। स्वरव्यवस्थयैवानेकार्थकशब्दानां नियतोऽर्थः प्रकाश्यते। स्वरज्ञानं विना प्रतिपदं भ्रान्त्यावरणमाच्छादयति पाठकान्। अतस्तु ऋग्वेदभाष्यभूमिकायां स्वामिना दयानन्देन प्रतिज्ञातमस्ति–

**वेदार्थोपयोगितया सङ्क्षेपतः स्वराणां व्यवस्था लिख्यत**[20] इति।

वैदिकस्वरेषुः, उदात्तस्य प्रामुख्यं दृश्यते। यास्केन उदात्तानुदात्तयोः प्रकृतिरेवं विविक्ताऽस्ति–

**तीव्रतरमुदात्तम्, अल्पीयोऽर्थतरमनुदात्तमिति।**[21]

एकस्मिन् पदे प्राय एक एव वर्ण उदात्तत्वं भजतेऽवशिष्टाश्चानुदात्तत्वधर्मसंश्लिष्टा भवन्ति। उदात्तस्वरोपेतः प्रत्ययस्तद्युक्ता प्रकृतिर्वापि प्रामुख्येण परिगण्यते। समासप्रक्रियायामपि यत्रोदात्तो वर्तते, तस्यैव पदस्यार्थप्राधान्यं भवति, यत्र चाऽनुदात्तधर्मस्तत्र गौणत्वं विद्यते। अस्मिन् प्रसङ्गे वेङ्कटमाधवेन लिखितमस्ति–

**तत्रोत्तरपदार्थस्य प्राधान्यं यत्र वर्तते।**
**उदात्तस्तत्र भवति..............................॥**[22]

वाक्येष्वप्येवमेव आख्यातादिषु उदात्तानुदात्तधर्मानुसारं क्रमेण प्राधानं-प्राधान्यं वा निर्णीयते। यथा–कृष्णकम्बलम् आनय।

अत्र णकारोत्तरर्ती अकार उदात्तधर्मविशिष्टः। अतस्तु तद्युक्तस्य कृष्णपदस्य प्राधान्यम्।

अर्थोऽयमापतति–कृष्णकम्बलयुक्तमानयेति। अनेकेषु यत्कृष्णवर्णमयं तेन युक्तमिति। अन्यपदप्रधाने सत्यप्यत्र विद्यमानयोरुभयोः पदयोः कृष्णपदस्य प्राधान्यमस्ति। पुनश्चैवम्– कृष्णकम्बलम् आनय।

इत्यत्र स्वरपरिवर्तने कृते लकारोत्तरवर्तिन्यकारे उदात्ते सति कम्बलपदस्य प्राधान्यं द्योत्यते, कृष्णत्वधर्मविशिष्टं कम्बलमानय इत्यर्थः। समस्तपदे विशेष्यविशेषणयोर्मध्ये उत्तरवर्तिनो विशेष्यपदस्य मुख्यत्वं प्रोक्तं तच्च उदात्तप्रकर्षेण सुव्यक्तं भवतीत्येवं पाणिनिसूत्रेण व्याकृतमस्ति–'समासस्ये'ति।[23] अर्थात् समासे अन्ते उदात्तो विद्यत इति।

वेदे स्वरा एव तत्साधनं येन सूक्ष्मं वास्तविकञ्च पदार्थविज्ञानमवगन्तुं शक्यते। स्वरशास्त्रमवलम्ब्य वेदार्थजिज्ञासुः पदानां सूक्ष्मं रहस्यमपि साक्षात्कर्तुं प्रभवति। स्वरशास्त्रविशारदो वेङ्कटमाधवो लिखति–

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्पष्टा इति।।**[24]

स्वरभेदे सति अर्थभेदो जायत एव। अत एवासौ ब्रवीति-

**अर्थाभेदे तु शब्दस्य सर्वत्र सदृशः स्वरः।**
**यदा न तं स्वरं पश्येदन्यथार्थं तदा नयेत् ।।**[25] इति

अनेन स्वकीये ऋग्वेदानुक्रमणीपरिशिष्टे पदविभागविषये स्वरवैशिष्ट्यमेवमुद्घोषितम्-

**नामाख्यातविभागश्च स्वरादेवावगम्यते।** इति।

अर्थनिर्णये स्वराणां महती भूमिका विद्यते। एनामेव भूमिकां पुनः पुनः स्मारयत्याचार्योऽयं वेङ्कटमाधवः। तद्यथा- **अनुक्रमणिका षष्ठी स्वरतोऽर्थस्य निर्णयः।**
**प्रदर्शयति मन्त्रेषु ग्राह्या सा निपुणैर्नृभिः।।**[26]

अनेकार्थशब्दानामर्थनियमनसाधनेषु स्वरविज्ञानस्यापि साधनत्वं विज्ञापयति भर्तृहरिरपि-

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।।** [27]

भगवता पतञ्जलिना 'स्थूलपृषती' पदेऽर्थसंशये समुत्पन्ने स्वरस्य निर्णेतृत्वमित्थं प्रतिपादितम् - यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।

लौकिक्यां वैदिक्याञ्चापि संस्कृतभाषायां नैकार्थयुतानां शब्दानां बाहुल्यमस्ति। स्वरविवेक एव अर्थप्रकाशने प्रकृष्टोपकारकोऽस्ति।

अष्टाध्याय्यां 'क्षयो निवासे'[28] इति सूत्रे स्पष्टमुदीरितमस्ति यदाद्युदात्तः क्षयशब्दो गृहस्य पर्यायोऽन्तोदात्तश्च विनाशस्य क्षतेर्वा ज्ञापकोऽस्ति। माध्यन्दिनसंहिताया मन्त्रांशोऽस्ति- **न तस्य प्रतिमा अस्ति।**[29]

अत्र द्विधाऽर्थः कर्तुं शक्यते- अवनतस्य प्रतिमा अस्तीत्येवं, न तस्य प्रतिमा अस्तीति एवञ्चापि। अनयो; कतमोऽर्थः समीचीनः कतमश्चासङ्गत इति जिज्ञासायां स्वरशास्त्रानुगतं समाधानं प्रस्तूयते। तदनुसारमेकस्मिन् पदे एक एवोदात्तः तिष्ठति न तस्य इत्यत्र नवर्णोत्तरवर्ती तवर्णोत्तरवर्ती चोभावेव अकारौ उदात्तौ। अतः स्पष्टमिदं यद् 'न' पृथक्पदं 'तस्य' च पृथगेव वर्तते। एवञ्च न तस्य प्रतिमाऽस्ति-इत्ययमर्थो निश्चीयते। स्वरशास्त्राश्रयेण विनैतत्कर्तुं न शक्यते। माध्यन्दिनसंहिताया एवापरमेकमुद्धरणं दीयते- **भ्रातृव्यस्य वधाय**[30] **इति।**

भ्रातृव्यपदस्य शत्रुः भ्रातृसुतश्चैवमर्थद्वयं विश्रुतमस्ति। अत्र कोऽर्थो ग्राह्यः स्यात् ? स्वरशास्त्रसाहाय्येनात्रापि सुव्यक्तं भवति यदाद्युदात्तं भ्रातृव्यपदं शत्रुवाचकम्, स्वरितञ्च भ्रातृसुतर्थमस्ति। मन्त्रांशेऽस्मिन् भ्रातृव्यपदमाद्युदात्तमस्ति। मन्त्रांशेऽस्मिन् भ्रातृव्यपदमाद्युदात्तमस्ति। इत्थं शत्रोः वधायेत्यस्यार्थ उपपद्यते।

एवमेव मन्त्रगतपदानां सौक्ष्म्येण अर्थबोधायापि स्वरविचार आवश्यकोऽस्ति।

**उप त्वाग्ने दिवे दिवे। दोषावस्तर्धिया वयम् नमो भरन्त एमसि।।**[31]

अत्र 'दोषावस्तः'-पदमाद्युदात्तं तच्च पादादाववस्थितम्। पादादौ स्थितमाद्युदात्तपदं सम्बोधने प्रयुक्तं लभ्यते। काण्वसंहिताया मन्त्रभाष्ये आचार्येण सायणेन एवमस्यार्थो व्याख्यातोऽस्ति-

हे दोषावस्तः अग्ने! दोषा रात्रिः तस्यामपि वसति अजस्रं धार्यमाणत्वान्नोपशमति, इति दोषावस्ता।

उवटभाष्यमप्यत्र द्रष्टव्यमस्ति- हे दोषावस्तः, दोषेति रात्रिनाम। वस निवासे। राज्र्यां वसनशीलो

दोषावस्ता तस्य सम्बोधनं हे दोषावस्त:।[32]

ऋग्वेदस्य अक्षसूक्ते[33] अन्तोदात्तो वृषलशब्द: शतपथब्राह्मणे[34] चाद्युदात्तो वृषलशब्द: प्रयुक्तोऽस्ति।

स्वरविज्ञानविचक्षण: श्रीमान् युधिष्ठिरमीमांसको निर्दिशति यदाद्युदात्तो वृषलशब्दो धर्मनिष्ठस्य वाचकोऽन्तोदात्तश्चाधर्मिणो निकृष्टस्य वा बोधकोऽस्ति। उभावेवार्थौ निरुक्ते व्याख्यातौ, यथा-

**वृषलो वृषशीलो भवति वृषाशीलो वेति।**[35]

स्वरविज्ञानं कथं गूढार्थं स्फुटीकरोतीत्यस्य प्रतिबोधनार्थमाचार्यो युधिष्ठिरमीमांसको यजुर्वेदस्य मन्त्रमुद्धरति- **कुर्वन्नेवह कर्माणि जिजीविषेच्छतं समा:।** [36] इति।

भाषायां तिप्सिप्मिप्प्रत्ययेषु परेषु सन्नन्तधातुरूपमाद्युदात्तस्वरसंश्लिष्टं भवत्येवञ्च धातावेवोदात्तत्वं भवति, यथा- चिकीर्षति चिखादिषति-प्रभृतिषु। चिकीर्षति-कर्तुमिच्छति, चिखादिषति-खादितुमिच्छतीत्यत्र इच्छाया: प्राधान्यं नास्त्यपि तु कृ-खादप्रभृतिधातूनामर्थस्य प्राधान्यं वर्तते। इदमेव कारणं यदत्र इच्छार्थकसन्प्रत्यये उदात्तो मूलधातुश्चोदात्त्वविशिष्टोऽस्ति।

परं 'जिजीविषेत्' इत्यत्र मन्त्रपदे ईदृशी स्थितिर्नास्ति। स्वरशास्त्रानुसारमत्र इच्छार्थकसन्प्रत्ययस्य प्राधान्यमिष्यते। 'जीव' धातुरत्र प्राणधारणक्रियायां प्रवर्तते। एषा क्रिया कर्त्रधीना नास्ति। कर्ता प्राणधारणस्य इच्छामात्रं कर्तुं प्रभवति, प्राणधारणक्रियायामस्य प्रभुता नास्ति। अतस्त्वत्र प्राधान्यवशादेव सन्प्रत्यये उदात्तत्वमस्ति।

एवं मन्त्रगतं गूढार्थं परिज्ञातुमपि स्वरविज्ञानस्यान्यतमं वैशिष्ट्यमस्ति। स्वरसहाय्येन पदार्थभ्रान्ति- र्विनश्यति। स्वरव्यत्ययेन तु वास्तविकोऽर्थ एव विलुप्येत। अत एव वेदे स्वराणां यथास्थिति एव मन्त्रार्थज्ञानाय प्रयत्नो विधेय इति।

सन्दर्भ:-

1. तै.भा.भू. तथा ऐ.ब्रा.भा.भू., सायण:।
2. तै.भा.भू., सम्पा. पं. बलदेव-उपाध्यय:, चौ.सं.सी, वाराणसी, १९३४, पृ. २.
3. तत्रैव, पृ. ४५. 4. म.स्मृ. २/६. 5. दयानन्द:, ऋ.भा.भू., सम्पा. युधिष्ठिरमीमांसक:, पृ.२२. 6. शु.य.वे. १९/७८.
7. अ.वे. ४/३५/६; ७/५७/१; १०/८/१७; १५/३/१७.
8. सामतन्त्र, सम्पा. ए.एम. दीक्षित:, का.हि.वि.वि., १९६१, भूमिका, पृ. १. 9. आनन्दाश्रमग्रन्थमाला, तै.सं.भा., पृ. ७.
10. श.ब्रा. ३/३/४/१८; 11. षड्विंशब्रा. १/१. 12. नि. ३/१६; 13. नि. ३/१६; 14. ना.शा. १७/११०;
15. का.प्र. ९/८४. 16. सा.द., परि. ३; 17. ना.शि. १/६. 18. पा.शि. ५२. 19. श.ब्रा. १४/४/१/२७.
20. ऋ.भा.भू., पृ. ३७४ (तृतीयं संस्करणम्). 21. नि. ४/२५.
22. अनुदात्तं पदमेकवर्जम्। (अष्टाध्यायी-६/१/१५८). 23. स्वरानुक्रमणी-१/८. 24. अष्टाध्यायी- ६/१/२२३.
25. स्वरानुक्रमणी-१/८. 26. ऋग्वेदानुक्रमणी-परि., पृ. १०५. 27. ऋग्वेदानुक्रमणी-परि., पृ. ११९.
28. वाक्यपदीयम् - पुण्यराजटीका, पृ. २१६, पं. १६ त: अग्रे। 29. अष्टाध्यायी-६/१/२०१. 30. मा.सं. ३२/२.
21. तत्रैव-१/१८ 32. ऋ.वे. १/१/७. 33. य.वे. ३/२२, उवटभाष्यम्। 34. ऋ.वे. १०/३४/११.
35. श.ब्रा. १४/९/४/१२. 36. नि. ३/१६. 37. य.वे. ४०/२.

प्रशिक्षक-कर्मकाण्ड, कौशल केन्द्र,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय:,वाराणसी

# शब्दार्थसम्बन्धानां नित्यत्वे भर्तृहर्यादीनां सम्मतिः

- डॉ. रामबाबूपाण्डेयः

लोपागमवर्णविकारप्रकृतिप्रत्ययविभागज्ञानविज्ञानकुशलानां नानाविधवाग्रागरञ्जितचेतसां शुद्धशेमुषीजुषां साधुत्वाऽसाधुत्वज्ञाने वैदुष्यप्रवीणानां वैयाकरणानां मते शब्दानामेव प्रामाण्यं स्वीक्रियते। तदुक्तं महाभाष्ये- **'शब्दप्रमाणका वयम् यच्छब्द आह तदस्माकं प्रमाणम् इति[1]'।**

वेदाः अपौरुषेयत्वाद् ईश्वरोपदिष्टत्वाच्च नित्याः। सर्वाण्यपि शास्त्राणि शब्दमयानि, यतोहि सर्वेषां ज्ञानानां मूलं शब्दा एव। एतादृशं किञ्चिद् ज्ञानं न दृश्यते यत् शब्दानुगमाद् ऋते भवेत्। उक्तञ्च भर्तृहरिणा- **न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।**

**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।**[2]

अतः शब्दाः नित्याः वेति जिज्ञासा व्याकरणवर्जितसकलशास्त्राध्ययनाऽनुशीलनालोडन- परायणानां हृदि जागर्त्येव।

आचार्यस्य व्याडेः संग्रहग्रन्थे शब्दानां नित्यत्वमनित्यत्वमुभयमप्युक्तम्। किन्तु आचार्येण पाणिनिना अष्टध्याय्याम् 'पृषोदरादीनि यथोपदिष्टम्'(पा. सू.6.3.109) प्रभृतभिः सूत्रैः वार्तिककृता कात्यायनेन 'सिद्धे शब्दार्थसम्बन्धे'(म.भा. वा. 1.1) 'सिद्धं तु नित्यशब्दत्वात्' इति वार्तिकाभ्याम्, भगवता पतञ्जलिना महाभाष्ये च 'नित्याः शब्दाः' 'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतः सर्वयोगष्वङ्गं भवति', 'नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजन- विकारिभिः', 'सर्वे सर्व पदादेशाः दाक्षीपुत्रस्य पाणिनेः। एकदेश विकारे हि नित्यत्वं नोपपद्यते।।' प्रभृतिभिर्वाक्यैः शब्दाः नित्या इत्येव सिद्धान्तितम्। एवञ्च वैयाकरणानाम्मते शब्दाः, शब्दार्थाः, शब्दार्थसम्बन्धाश्च नित्या एव। तदुक्तम् भर्तृहरिणा- **नित्याः शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिः।**

**सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ।।**[3]

तत्र व्याकरणे, तन्त्रमत्र व्याकरणशास्त्रमनुगतानि अनुतन्त्राणि वार्तिकानि, तेषामनुतन्त्राणाम्, सूत्राणाम्, भाष्याणाञ्च चूर्णिकानाम्, सन्देहचूर्णकत्वेन चूर्णिकाव्यपदेशः। प्रणेतृभिः, व्याकरणस्य प्रकृतत्वात् पाणिनिकात्यायनपतञ्जलिभिः, महर्षिभिः प्रत्यक्षधर्मभिः शब्दश्चार्थश्च सम्बन्धश्च ते तथोक्ताः नित्याः समाम्नाताः सम्यग् अभ्यासेनोक्ता इति योजना। भाष्यं हि चूर्णिकारूपं पस्पशाख्यं प्रथमाह्निकम्। यत्र शास्त्रानारम्भसमर्थका वादिनश्चूर्णिताः। 'स्पश् बन्धने' इत्यस्माद् यङ्लुगन्तात् पृषोदरादित्वात् निष्पन्नम् 'पस्पशा' इति रूपं चूर्णिकासमानार्थकमेव।

व्याकरणमहाभाष्ये भगवता पतञ्जलिना- किम् पुनर्नित्यः शब्दः? आहोस्वित् कार्य इति प्रश्नमुपस्थाप्योक्तम्-'संग्रहे एतत् प्राधान्येन परीक्षितम् नित्यो वा स्यात् कार्यो वेति। तत्रोक्ताः दोषाः, प्रयोजनान्यप्युक्तानि! तत्र त्वेष निर्णयो यद्येव नित्योऽथापि कार्यः। उभयथाऽपि लक्षणं प्रवर्त्यमिति।'[4]

अत: परं कथम्पुनरिदम् भगवत: पाणिनेराचर्यस्य लक्षणम् प्रवृत्तम्? शब्दं नित्यं मत्वा, अनित्यम्मत्वा, उभयं वा मत्वेति जिज्ञासायामाह पतञ्जलि:- 'सिद्धे शब्दार्थसम्बन्धे ' नित्य: शब्दो नित्योऽर्थो नित्य: सम्बन्ध इत्येषा शास्त्रव्यवस्था। शब्दार्थसम्बन्धानामनित्यत्वे हि तत्र पुरुषाणां स्वातन्त्र्ये शब्दार्थसम्बन्धा: स्वेच्छयाऽन्यथापि कृता भवेयुरिति शब्दार्थसम्बन्धानां स्वविषयाणामव्यवस्थया शास्त्रमपि न व्यवतिष्ठेत। तेषां नित्यत्वे तु सर्वस्यापि व्याकरणशास्त्रस्य विभिन्नकर्तृकस्याव्यवस्थापकत्वं सिध्येत। पूर्वोक्तकारिकायां नित्य: शब्द:, नित्योऽर्थ इति आकृतिनिर्देश:। अर्थात् शब्दपदेन शब्दाकृतिरभिधीयते एवमर्थपदेनार्थाकृति:। यतो हि 'जात्याख्यामेकस्मिन् बहुवचनमन्यतरस्याम्[5]' इति सूत्रेण 'आकृत्युपदेशात् सिद्धम् ' इति वार्तिकेन 'आाकृतिं वाजप्यायन: ' इति स्वरूपसूत्रस्थभाष्येण चाकृतिमभिधेयं स्वीकृत्य व्याकरणशास्त्रं प्रवृत्तमस्तीति प्रतीयते। व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवम्। तात्पर्यमिदं यद् यद्येकस्यां व्यक्तौ शक्तिरभ्युपगम्यते, तदा व्यक्त्यन्तरस्य बोधो न स्यात्। एकव्यक्तिविषयकशक्ति- ज्ञानादपरव्यक्तिविषयकशाब्दबोधाभ्युपगमे तु गो व्यक्तिविषयकशक्तिज्ञानादश्वविषयकबोध ापत्या तद्व्यक्तिविषयकशक्तिज्ञानस्य तद्व्यक्तिविषयकबोधो हेतुत्वेनावश्यकल्प्यतयैकविषयक- ज्ञानादपरव्यक्ति- बोधानुदयापत्त्या सकलव्यक्तिभानार्थं तावद् व्यक्तिषु शक्तिकल्पनायां गौरवस्य स्फुटतया जातावेव शक्तिकल्पनोचिता। यद्यपि 'गौर्गोपदवाच्य:' इति शक्तिग्रहो व्यक्तिविषयकोऽपि, तथापि 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत: सति विशेष्यबाधे' इति न्यायेन जातावेव सत्तां परिछिन्नत्ति। यद्वा जातिविशेष्यक एव शक्तिग्रह: 'गौर्गोपदशक्य:' इति जातिशक्तिवाद एवमेवाभिलापात्।

एवञ्च तथा घटशब्दस्यैकघटव्यक्तौ शक्तिस्वीकारे घटव्यक्त्यन्तरबोधेन शक्तिग्रहबोधयो: कार्यकारणभावे व्यभिचार:, सर्वासु घटव्यक्तिषु शक्तिस्वीकारे शक्त्यानन्त्यमिति घटत्वजातौ शक्ति: स्वीक्रियते। एवमेकस्य घटशब्दस्य शक्तत्वे घटपदान्तराद्बोधेन व्यभिचार:, सर्वस्य शक्तत्वे च शक्त्यानन्त्यमिति घटशब्दत्वजाति: शक्त्याश्रयत्वेन स्वीक्रियते। आकृतिश्चात्र जाति:, न त्ववयवानां सन्निवेशविशेष:, 'एका आकृति:, सा चाभिध ीयते[6]' इति सरूपसूत्रस्थभाष्यात्, 'प्रख्याऽविशेषात्[7]' इति सरूपसूत्रस्थवार्तिकस्य 'प्रख्या-बुद्धि:, तस्या अविशेषात्- एकरूपत्वात्तद्विषयस्याप्यैक्यं प्रतीयते। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु गौ:, गौ:' इत्येकाकार- प्रत्ययोदयादवश्यमेकेनालम्बनेन सामान्येन भाव्यमिति जातिसद्भाव एकत्वञ्चावसीयते' इत्याकारककैयटव्याख्यानाच्च। जातिर्हि नित्या, शब्दार्थव्यक्तीनान्तु प्रत्यक्षेणैवोत्पादविनाशानुभवात्। शब्दार्थसम्बन्धस्तु स्वरूपेणैव नित्य: समवायवत्।

ननु पटशब्दत्वादिरूपजातेर्वाचकत्वे तस्या: सर्वदा सत्त्वात् सर्वपदार्थबोधापत्तिरिति, चेत् न, तत्तद्वर्णोच्चारणेनाभिव्यक्ता सती साऽर्थबोधिका, न स्वरूपसतीत्यङ्गीकारेण दोषाभावात्। उक्तञ्च हरिणा-'अनेकव्यक्त्यभिव्यङ्ग्या जाति: स्फोट इति स्मृता:[7]' अर्थात् पदे प्रकृतिप्रत्ययरूपानेकवर्ण- व्यक्तिमाध्यमेन, वाक्ये सुबन्ततिङन्तादिपदमाध्यमेन समुदायवाचकत्वशक्त्या वाक्यस्य वाचकत्वमिति सिद्ध्यत्यखण्डवाक्यजातिस्फोट:।

अनेकव्यक्त्यभिव्यङ्ग्यचैव जातिरिति स्वीकारेणैव स्फोटस्य नित्यत्वाद् सर्वदाऽर्थबोधोपत्तिरिति परास्तम्। जाते: सनातनत्वेऽपि व्यञ्जकासमवधानात्तदभिव्यक्त्यभावेन बोधस्यापादयितुमशक्यत्वात्। यद्यपि प्रत्येकादर्थबोध ापत्तिरूपो दोष उद्भावित:, परिहृतश्च स वर्णजातिस्फोटपक्षे, तथापि पदवाक्यजातिस्फोटपक्षे न स दोष उद्भावयितुं शक्य:, तत्र तस्या: जाते: समुदायपर्याप्तत्वस्य धर्मिग्राहकमानेनाऽभ्युपगमात्। एवञ्चाभिहितं तत्र ''अनेकव्यक्त्यभिव्यङ्ग्या' इत्यादि श्लोकेनेति। कैश्चिद् व्यक्तयो ध्वनय एवेत्यर्थ:, ध्वनिनिर्णयोर्भेदाभावाभ्युपेयन्त

इति शेषार्थः। काव्यप्रकाशकृता शब्दस्य ध्वनित्वेन प्रकल्पितत्वाच्छ्लोकार्थस्य परिपुष्टत्वादिति। अत्र च नित्यः शब्दः, नित्योऽर्थः सम्बन्धोऽपि नित्यः इत्येषा शास्त्रव्यवस्था। शब्दार्थसम्बन्धानाम्– नित्यत्वे हि तत्र पुरुषाणां स्वातन्त्र्ये शब्दार्थसम्बन्धाः स्वेच्छयाऽन्यथापि कृता भवेयुरिति शब्दार्थसम्बन्धानां स्वविषयाणामव्यवस्थया शास्त्रमपि न व्यवतिष्ठेत। तेषां नित्यत्वे तु सर्वस्यापि व्याकरणशास्त्रस्य विभिन्नकर्तृकस्याप्येकविधशब्दार्थसम्बन्धज्ञापकतया व्यवस्थोपपत्तिः।

**अयमाशयः**– विदितवेदितव्यैरतीन्द्रियार्थदर्शिभिर्यैः सूत्रवार्तिकभाष्याणि रचितानि तैरेव शब्दार्थसम्बन्धानां नित्यत्वं समर्थितमिति तद्गौरवात् तेषां नित्यत्वे न संशयितव्यम्। प्रत्युत तद्वचनविरोधेन शब्दार्थसम्बन्ध ानामनित्यत्वसाधकानाम् 'शब्दोऽनित्यः कृतकत्वात्' इत्याद्यनुमानानाम् 'नरकपालं शुचि प्राण्यङ्गत्वात्' इत्यनुमानस्यैवागमविरोधेन बाधितत्वेन नैव प्रामाण्यम्। तथा च व्यवस्थितसाधुत्वेषु नित्येषु शब्देषु 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति[9]' इति सिद्धान्तेन साधुत्वज्ञानपूर्वकशब्दप्रयोगे धर्मोत्पत्तिबोधनात् साधुत्वज्ञानाय शास्त्रप्रणयनमावश्यकमिति व्यवस्थितसाधुत्वेषु शब्देषु शब्दानुशासनं स्मृतिशास्त्रं प्रवृत्तमिति।

तत्र सूत्रकृता 'पृषोदरादीनि यथोपदिष्टम्[10]' इति सूत्रेण यथोपदिष्टस्य पृषोदरादित्वात् साधुत्वाभ्यनुज्ञानात् 'तदशिष्यं संज्ञाप्रमाणत्वात्[11]' इति सूत्रेण 'आपो दाराः' इत्यादिषु लोकावगमाल्लिङ्गवचननियम् इव 'पञ्चालाः' इत्यादौ संज्ञानां संज्ञा इति संज्ञावगमस्तत्प्रमाणत्वात् लिङ्गवचननियमो भविष्यतीति तत् 'लुपि युक्तवद्व्यक्तिवचने[12]' इति सूत्रमशिष्यम् इत्येव ं युक्तवद्वचनप्रत्याख्यानात्, 'लुब्योगाप्रख्यानात्[13]' 'योगप्रमाणे च तदभावेऽदर्शनं स्यात्[14]' इति सूत्राभ्यां 'पञ्चालाः' इत्यत्र पञ्चालानां निवासो जनपद इत्येवम्भूतस्य योगस्यावयवार्थस्य प्रख्यानमवगमो नास्ति। यदि तर्हि सम्प्रति विनापि क्षत्रिययोगं देशविशेषे पञ्चालशब्दव्यवहारदर्शनं यद् भवति तद् न स्यात्। अतो योगानवगमात् तद्धितो नोत्पद्यते। ततश्च 'जनपदे लुप्[15]' इति सूत्रमपि न शिष्यमित्येवं लुप्प्रत्याख्यानाच्च व्याकरणात् प्रागपि व्यवस्थितसाधुभावाः शब्दाः सन्तीति सूचितम्। सा च व्यवस्था शब्दानां नित्यत्वे एवोपपद्यते। नानित्यत्वे। तथा सति स्वयं कल्पितत्वाच्छब्दानां शारक्रीडादिवदभ्युदयार्थत्वाभावेन व्यवहारमात्रार्थत्वापत्तौ, व्यवहारस्य च तैस्तैः पुरुषैः स्वस्वबुद्ध्यनुसारेण नवान् तद्विपरीतान् शब्दानुत्पाद्य निर्वोढुं शक्यत्वेन लोकावगमस्या-व्यवस्थितत्वापत्तौ तदनुरोधेन सूत्रकृदुक्तायाः साधुत्वव्यवस्थाया असामञ्जस्यापातात्। इति।

सन्दर्भः–


| | | | |
|---|---|---|---|
| 1. म. भा. | 2. वा. प. 1.123 | 3. वा. पा. ब्र. 23 | 4. महा. पस्पशाह्निके |
| 5. महा. पस्पशाह्निके | 6. पा. सू.1.2.59 | 7. म. भा. वा.1.1.21 | 8. म. भा. वा.1.2.64 |
| 9. म. भा. 1.2.64 | 10. म. भा. वा. 1.2.64 | 11. म. भा. कै. प्र. 1.2.64 | |
| 12. वा. प. ब्र. 93 | 13. म. भा. 6.1.84 | 14. पा. सू. 6.3.109 | |
| 15. प. सू. 1.2.53 | 16. पा. सू. 1.2.51 | 17. प. सू. 1.2.54 | |
| 18. प. सू. 1.2.55 | 19. प. सू 4.2.81 | | |


– नई दिल्ली

# वेदारम्भसंस्कारस्य कालनिर्णयः

– डॉ. विष्णुपदीगिरि[1]

**उपोद्घातः–** सुवर्णरजतादयः खनिजाः विशेषवैज्ञानिकसंस्कारेण यथा अग्नौ शुद्धाः भवन्ति तथैव विभिन्नसंस्कारैः मानवः समाजे मानवरत्नत्वमाप्नोति। मानवस्य सम्पूर्णजीवनं संस्कारक्षेत्रं भवति । संस्कारः मानवजीवनं संस्करोति। मानवस्य भौतिकाध्यात्मिकमहत्त्वं गतिशीलं करोति। संस्कृताः जनाः समाजनिमित्तं दीपशिखासदृशाः भवन्ति।

परन्तु संस्काराः यदा कदापि, यत्र कुत्रापि, येन केनापि वा स्वेच्छया न कर्तव्याः। सौरमण्डले स्थितानां ग्रहनक्षत्राणां गत्यनुरोधेन मनुष्याणां कृते विशिष्टसंस्कारविधानाय निर्दिष्टसमयस्य परिकल्पनमपि कृतम् । संस्काराणां कृते इयमेव समयरेखा मुहूर्तपदेन उच्यते। मुहूर्तः नाम अभीप्सितकार्यस्य साफल्यार्थं वा तत्तत् कार्यानुरोधेन तिथि-वार-नक्षत्र-योग-करणादीनां संयोगेन कालनिर्णयः। तत्र इष्टकार्यस्य साफल्यार्थं शुभकालनिर्णयः सुमुहूर्तः इत्युच्यते।

मनुष्याणां ज्ञानम् अनिवार्यं लोके जीवनार्थं विकासार्थं च। तज्ज्ञानं क्रमेण नियमेन सम्पाद्यते चेत् सा विद्या इत्युच्यते। विद्यायाः महत्त्वं सर्वे जानन्त्येव यथा- 'विद्याधनं सर्वधनप्रधानम्'। विद्यायाः प्रारम्भः शुभकाले एव कर्तव्यः। अन्यथा मनुष्यः ज्ञानार्जनं सम्यक् कर्तुं न शक्नुयात् । अतः वेदारम्भसंस्कारस्य प्रारम्भार्थं शुभकालनिरूपणं क्रियते।

**शुभाशुभकालनिर्णयः–** रवि-बुध-गुरु-शुक्रवासरेषु, अश्विनी-मृगशीर्ष-आर्द्रा-पुनर्वसु-पुष्य- अश्लेषा- पूर्वाफाल्गुनी- हस्त-चित्रा-स्वाती-मूल-पुर्वषाढा-श्रवण-धनिष्ठ-शतभिष-पूर्वाभाद्रानक्षत्रेषु, द्वितीया-तृतीया-पञ्चमी-षष्ठी- दशमी-एकादशी- द्वादशीतिथिषु य शुभग्रहाणां केन्द्रत्रिकोणेषु स्थितेषु दिवसेषु विद्यारम्भः शुभः प्रोक्तः।

पूर्वोक्तासु तिथिषु षष्ठी-एकादशी-द्वादशीतिथयः सामान्यतया अन्यासां तिथीनाम् अनुपलब्धौ एव स्वीक्रियन्ते। वासरेषु रवि-चन्द्रवारौ अपि ग्राह्यौ इत्यप्युक्तम् । परन्तु सोमवासरस्य ग्रहणे चन्द्रः तदा वृद्धिचन्द्रो भवेत् ।

अथ सामान्यकालनिर्णयानन्तरं विशेषाः उपस्थाप्यन्ते। देवानां दिवसे नाम उत्तरायणे, वेदशाखानाम् अधिपतयः अर्थात् गुरु-शुक्र-कुज-बुधग्रहाः क्रमेण ऋक्-यजुः-साम-अथर्ववेदानाम् अधिपतयः, तेषाम् उदयकाले विद्यारम्भः क्रियते चेत् ज्ञानं, वक्तृत्वं, कीर्तिश्च लभ्यन्ते। ज्योतिर्विदाभरणे कालिदासेनोक्तम्-**वागर्थिन इह भाषायशसे विद्यारम्भोऽमरो दिवसे।**[1] इति।।

केषाञ्चिदाचार्याणां मते चान्द्रवर्षे विष्णुशयनकाले नाम आषाढमासस्य शुक्लपक्षस्य एकादशीतः कार्तिकशुक्ल-एकादशीपर्यन्तः कालः त्याज्यः इति कालिदासेन सिद्धान्तितम् । यथा- **कश्चिदुपक्रममाह महर्षिर्देवशयनवत्कालमपास्य।**[2] इति।।

विविधसन्धिकालेष्वपि विद्यारम्भः न कर्तव्यः । ते सन्धयः उत्तर-दक्षिणायनयोः सन्धिः, दिवारात्र्योः सन्धिः अर्थात् प्रातःकालसायंकालयोः, बृहस्पतेः वर्षयोः सन्धिकालः, ऋत्वोः सन्धिकालश्च वर्तन्ते ।

सन्धिर्नाम द्वयोर्मध्ये स्थितः कालः अस्मिन् काले पूर्ववर्तिनः परवर्तिनः वा प्रभावः न विद्यते। अतः फलितं शून्यं भवति। अतः एषः कालः त्याज्यः। बृहस्पतेः वर्षं नाम एकस्मिन् राशौ तस्य स्थितिकालः।

जन्मकालात् समवर्षेषु विद्यारम्भः निषिद्धः। तस्मिन् काले क्रियते चेत् विद्याया विद्यार्थीनाम् अहंकारो वर्धते। तस्मात् ज्ञानवृद्धिर्न भवति। परन्तु समवर्षस्य आद्यन्त्यमासत्रयं ग्राह्यम्।

भारतीयानां ज्ञाननिधिः अपूर्वः विस्तृतश्चासीत्। तत्र चतुर्वेदाः, षडङ्गानि, अष्टादशपुराणानि, चिकित्साशास्त्रादयः पाठ्यन्ते पठ्यन्ते च पूर्वकाले वर्तमानकालेऽपि । अथ विविधशास्त्राणां विशेषरूपेण अध्ययनाय योग्यकालोऽपि उक्तः । कालस्यास्य विवरणं पट्टिकारूपेण दियते ।

एवं प्रकारेण विविधशास्त्राणाम् अध्ययनार्थं योग्यकालस्य प्रतिपादनं लभ्यते मुहूर्तग्रन्थेषु। विद्यारम्भाय सामान्यतया यः शुभकालः उक्तः स तु पूर्वोक्तानां शास्त्राणाम् अध्ययनार्थमपि योग्य एव। परन्तु विशेषतया तस्मिन् शास्त्रे ज्ञान-यशस्संपदानां सम्पादनार्थं पूर्वोक्तस्य विशेषकालेन सह आवश्यकता अस्ति। संदर्भानुसारेण, अवसरानुरोधेन च कालनिर्णयं कृत्वा विद्यारम्भः कार्यः ।

**अनध्यायकालविचारः-** अनध्यायकालो नाम वेदानां, वेदाङ्गानां च अध्ययनार्थम् अध्यापनार्थं च अयोग्य समयः । अतोऽस्मिन् काले अध्ययनादिकं न करणीयम् । अथ अनध्यायकालो नाम क इति विचार्यते ।

**सामान्यानध्यायाः-** चैत्रादिद्वादशमासेषु शुक्लकृष्णपक्षयोः चतुर्दशी, पूर्णिमा, अमावास्या, प्रतिपत्, अष्टमीप्रभृतयः तिथयः, चरराशीनां नाम मेष-कर्क-तुला-मकरराशीनां संक्रान्तयश्च सामान्यतया अनध्यायाः भवन्ति। चैत्रमासस्य शुक्लपक्षे तृतीयातिथिः, वैशाखमासे शुक्लपक्षे तृतीया, ज्येष्ठमासस्य शुक्लपक्षे तृतीया, अस्मिन्नेव मासे कृष्णपक्षे द्वितीया-सप्तमी-नवमी-त्रयोदशीप्रभृतयः तिथयः, एवमेव भाद्रपदमासस्य शुक्लपक्षे श्रवणनक्षत्रं, कृष्णपक्षे मघानक्षत्रं च, आश्विनमासे शुक्लपक्षस्य द्वितीया-तृतीया-नवमी-दशमीप्रभृतयः तिथयः, कार्तिकमासे शुक्लपक्षस्थाः द्वितीया-नवमी- एकादशी- द्वादशी तिथयः, कृष्णपक्षे द्वितीया-द्वादशी-त्रयोदशी तिथयः, मार्गशीर्षमासे कृष्णपक्षे सप्तमी-नवमी तिथिः, पौषमासे शुक्लपक्षस्य एकादशी, कृष्णपक्षस्य द्वितीया-सप्तमी-नवमी तिथयः, माघमासे शुक्लपक्षस्य द्वितीया-चतुर्थी-सप्तमी-दशमी तिथयः, कृष्णपक्षस्य द्वितीया-सप्तमी-नवमी तिथयः, फाल्गुनमासे कृष्णपक्षे द्वितीया-सप्तमी-नवमी च तिथयः अनध्यायाः उक्ताः। यथोक्तम्-

**पर्वाग्रादियुगाष्टमीतितिथयो मध्वादिपक्षद्वयेऽनध्यायाश्चरसङ्क्रमा अथ मघौ वह्निश्च शुक्रे यमः ।**
**राधेऽग्निस्त्वसितो यमः शुचि दृगाशार्कास्त्रयोदश्यथो मार्गे कृष्णनगग्रहाविष दृगङ्काशाग्नयः कीर्तिताः ।।**
**पौषेशस्त्वसिता दृगङ्कमुनयोऽन्त्ये कृष्णखेटाद्रिदृङ् मार्गे कब्धि गद्रयस्त्वसितजा बाह्वङ्कपृथ्वीधराः ।**
**ऊर्जे द्व्यङ्करवीश्वरास्त्वसितजा दृग्विश्वसूर्या नभ- स्येऽग्निः कृष्ण दृगद्रिविश्वनवमी पैत्र्यं यमोऽन्यः श्रवाः।।**[3] इति।।

अनध्यायतिथिषु सप्तमी-दशमी-त्रयोदशीप्रभृतयः तिथयः सामान्यतया शुभकार्येषु, अध्ययनविषयेषु च स्वीक्रियन्ते। परन्तु पूर्वोक्तमासेषु पक्षयोश्च यदि एताः तिथयः वर्तन्ते, ताः अध्ययनाध्यापनकार्येषु त्याज्याः इति। परन्तु पूर्वोक्तानां त्याज्यतिथीनाम् अपवादोऽपि उक्तः।

**अनध्यायतिथीषु दोषकालनिर्णयः-** अनध्यायतिथिः पूर्वस्मिन् दिने सूर्यास्तकालात् पूर्वं मुहूर्तोन्मिता स्यात् अथवा अग्रिमदिने सूर्योदयकालात् त्रिमुहूर्तमिता भवति चेत् पूर्वस्मिन् दिने परदिने च अनध्यायकालो भवति। अस्मिन् काले वेदाध्ययनं न करणीयम्। प्रतिपत्-अष्टमी- चतुर्दशी-पूर्णिमा-अमावास्यातिथीः विहाय अन्येषु अनध्यायतिथिनक्षत्रादिषु शास्त्रस्मृत्योः वेदाङ्गानां च अध्ययनं कर्तुं शक्यते। पूर्वोक्तदोषतिथिषु वेदाध्ययनमन्त्रादिकं च पठेत् । यथोक्तं नारायणदैवज्ञेन-

**योऽनध्यायतिथिः स पूर्वदिवसे स्तात्प्राङ्मुहूर्तोन्मिचोऽन्यस्मनवोदयतः क्षणत्रयगतो ब्राह्मेह नैवाभ्यसेत्।**
**पर्वाग्रादियुगष्टमीति च तिथींस्त्यक्त्वैषु शास्त्रस्मृती वेदाङ्गानि समभ्यसेच्च निखिलेषूक्तं पठेन्नैत्यकम्।।**[4]इति।।

अनध्यायतिथीनां स्थितिः दिने कथं वर्तते इति विचार्य, तदनन्तरं दोषनिर्णयः कार्यः। पूर्वोक्ततिथिः विहाय तदितरासु तिथिषु ज्योतिष-व्याकरण-शिक्षा-छन्द-निरुक्त-कल्पाख्यानि षडङ्गानि अध्ययनयोग्यानि जायन्ते। पुनः नित्यनैमित्तिकमन्त्रपठनादिषु अनध्यायतिथ्यादीनां दोषो न भवेत्।

**नैमित्तिकवशादनध्यायकालनिर्णयः-** गुरुशिष्ययोर्मध्ये अकस्मात् नकुलः, मार्जारः, मृगः , गर्दभः, अग्निः, अजः, जलं, सर्पः, गजः, अश्वः, उष्ट्रः, अन्त्यः, मूकः, उन्मत्तः, शकटं, यानं वा यदि आगच्छति तदा दिनत्रयं यावत् अनध्यायः स्यात्। एवमेव गुरु-शिष्ययोर्मध्ये मण्डूकः, पक्षी, जलजन्तुः, यः कोऽपि मनुष्यः वा आगच्छति दिने चेत् तदा सूर्यास्तकालपर्यन्तं, रात्रौ चेत् सूर्योदयपर्यन्तम् अनध्यायः स्यात्। यदि तयोर्मध्ये स्त्री, गौः, प्राण्यङ्गं वा यदि आगच्छति तदा तदहः अनध्यायः भवति। उत्सवे, मध्यरात्रे, अशौचे, मार्गे च अध्ययनं न करणीयम् । तथैव कपित्थशाल्मलिमधुश्लेष्मातकादीनां छायायां न

पठेत्। वर्तमानकाले प्रायः सर्वेऽपि छात्राः उन्नतविद्यायाः अध्ययनसमये रात्रौ एव अध्ययनं कुर्वन्ति । परन्तु रात्र्यध्ययनं शास्त्रेषु निषिद्धम्। अस्मिन् विषय एवं वक्तुं शक्यते यत् वेदशास्त्रादीनामध्ययने पूर्वोक्तदोषः अधिकः स्यात्। आधुनिकविद्यासु तादृशदोषः न्यूनः एव व भवेदिति।

**विविधानध्यायकारकविषयाः-** स्वकीयग्रामे यः कोऽपि म्रियते चेत् तस्मिन् दिने न पठनीयम्। शुनः शूद्रस्य च समीपे न पठेत्। श्राद्धभोजनं कृत्वा तदन्नपरिपाकावधिपर्यन्तम् अध्ययनं न कार्यम् । सूर्यचन्द्रमसोरन्यतरस्य ग्रहणदिनात् दिनत्रयं न पठेत्। गुरुजनस्य, नृपस्य च मरणदिनात् दिनत्रयपर्यन्तं, उपाकर्म-उत्सर्ग-भूकम्प-वज्रपातादिषु दिनत्रयपर्यन्तं न पठेत्। स्वग्रामदहनात्, केत्वादेः उत्पातदर्शनकालात् दिनत्रयं यावत् अनध्यायकालः स्यात्। अकालमेघगर्जनं यदि भवेत्तदाऽपि दिनत्रयं न पठेत्। सकालमेघगर्जनं, कस्यचित्प्रसिद्धपुरुषस्य मरणं च दिने चेत् सूर्यास्तपर्यन्तं, रात्रौ चेत् सूर्योदयपर्यन्तम् अध्ययनं न करणीयम् । यथोक्तं-

**ग्रामान्तः कुणपे श्वशूद्रनिकटे श्राद्धाशने वक्रगे ताम्बूले ग्रहणाद्गुरुक्षितिपतिप्रान्तादुपोत्सर्गतः ।**
**भूकम्पाशनिपाततः पुरदहे रिष्टावलोकात्र्यहं गर्जेऽनार्तवके र्त्यहं समयजे सज्योतिरन्ते सतः ।।** [५] इति ।।

ग्रामे यस्य कस्यापि मरणं भवेत्तर्हि न पठेत् इत्युक्तम्। पत्तने प्रतिदिनं यः कोऽपि म्रियते एव। अतः पत्तने विद्यमानाः स्वप्रदेशे यस्य कस्यापि मरणं स्यात्तदा न पठेयुः। मृदङ्गतुरहपटहादीनां वाद्यानां शब्दः श्रूयते चेत्, उलुकः, गर्धभः, पीडितो जन्तुः, श्रृगालः एतेषां शब्दोऽपि श्रूयते चेत् दिनत्रयम् अनध्यायो भवति। तथैव सामवेदमन्त्राणां शब्दः श्रूयते चेत्, वायोराधिक्ये, जलमध्ये, नीहारे, पतिता, मिथ्याभिशापी तयोः समीपे, धाावन्मनुष्यावलोकने ग्रामस्य सीमासमीपे, श्मशानभूमौ, वेदव्रतस्य मृते च दिनत्रयमनध्यायः स्यात्। भोजनानन्तरं यावदार्द्रहस्तो भवति तावन्न पठेत्।

**प्रदोषकालनिर्णयः-** रात्र्यर्धे द्वादशीतिथेरनन्तरं त्रयोदशीतिथिः स्यात्तर्हि, रात्रौ सार्धप्रहरे षष्ठीतिथेरनन्तरं सप्तमीतिथिः स्यात्तदा, प्रथमप्रहरे तृतीया तिथेरनन्तरं चतुर्थीतिथिः स्यात्तदा प्रदोषकालो भवति। अस्मिन् काले रात्रेः पूर्वभागे अध्ययनं वर्ज्यम्। अपरार्धे पठेदेव। श्वः अनध्यायः स्यादिति बुद्ध्या इह रात्रिपठनं वर्ज्यम्। अनध्यायदिवसात् पूर्वरात्रे अध्ययनं न कार्यमिति। सदा प्रातः सायं द्वयोः सन्ध्ययोः अध्ययनं वर्ज्यम्। यस्मिन् प्रहरे चौरोपद्रवो भवेत् तस्मिन् प्रहरे पठनं वर्ज्यम्। श्राद्धादिदुर्भोजने दृष्टप्रतिग्रहे च दिनत्रयपर्यन्तम् अध्ययनं वर्ज्यम् । यथोक्तम्-

**रात्र्यर्धे मदनो मुनिर्दलयते यामे चतुथर्थ्याद्यके प्राग्रात्रौ पठनं ह्युपाकरणतो मासं निशः प्राग्दले ।**
**श्वोऽनध्याय इतीह रात्रिपठनं वर्ज्यं सदा सन्ध्ययोश्चोरोपद्रवयामके त्रिदिवसं दुर्भुक्प्रतिग्राहयोः ।।** [६] इति ।।

सम्प्रति प्रातःकाले सायंकाले सर्वे पठन्ति। परन्तु सन्ध्याकाले पठनम् असमिचीनम्। अतः यदा सन्ध्याकालः वर्तते तदा न्यूनातिन्यूनं पञ्चनिमेषपर्यन्तम् अध्ययनं न कार्यमिति।

**उपसंहारः-** दिग्देशकालानुकूलकर्म एव यथार्थफलं प्रदत्ते। नान्यथा। बहुषु प्रकरणेषु सत्स्वपि, सततोद्योगे कृतेऽपि बहुकर्माणि अनिष्टफलप्रदानि भवन्तीति सार्वजनीनोऽयं विचारः। ग्रहाणां प्रभावः तस्य परिणामादिविषयान् यौगिकदृष्ट्या विचिन्त्य लोकोपकारार्थं प्रत्येककर्मणः करणे उचितकालनिर्णयो बहुभिः पूर्वसूरिभिः विहितः। अत एव फलैकेप्सुभिः मानवैः मौहूर्तिकैरुक्तकाले एव नित्यनैमित्तिककार्याण्यनुष्ठीयन्ते। गर्भाधानादिसंस्कारविशेषे मुहूर्तानां प्रधान्यं सिद्धमेवास्ति। मुहूर्तमनुसृत्य क्रियमाणानि कार्याणि शुभफलदायकानि भवन्ति।

**सन्दर्भाः**

१. ज्योतिर्विदाभरणम्- प्र.-१, श्लो.-२ २. ज्योतिर्विदाभरणम्- प्र.-१, श्लो.-३ ३. मुहूर्तमार्तण्डः- प्र.-६, श्लो.-१,२
४. मुहूर्तमार्तण्डः- प्र.-६, श्लो.-३ ५. मुहूर्तमार्तण्डः- प्र.-६, श्लो.-५ ६. मुहूर्तमार्तण्डः- प्र.-६, श्लो.-

- आंशकालिकाध्यापिका, अमृतवाणी-गुरुकुल-संस्कृतविश्वविद्यालयः, नीलगिरिः बालेश्वरम्, उडिशा

# विभिन्नदार्शनिकानां मते धात्वर्थविमर्शः

- **जितेन्द्रकुमारशर्मा**

लोकेऽर्थविषयकबोधजनकत्वरूपा शक्तिः वाक्ये तिष्ठति। तथापि शास्त्रीयप्रक्रियानिर्वाहार्थं तत्र पदादिकल्पना पदादिषु च प्रकृति प्रत्ययादिकल्पना, भवति। शास्त्रे प्रकृतिप्रत्ययोर्मध्ये कस्य प्राधान्यमिति जिज्ञासयाम्, उणादायो बहुलम् 'इति सूत्रे नाम च धातुजमाह, एवं निरूक्ते नाम खल्वपि धातुजमेवाह नैरूक्तः। वैयाकरणानां शाकटायन आह, धातुजं नामते, भाष्यादिप्रमाण्यात् सकलशब्दमूलभूतत्वात् धात्वर्थो निरूप्यते- धात्वर्थत्वन्नाम् - फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। यद्यपि धात्वर्थविषये बहुविवादाः विभिन्नदार्शनिकानां मध्ये तत्र, केचन फलमात्रं धात्वर्थः, व्यापारः प्रत्ययार्थः फलव्यापारौ धातु वाच्यौ, आख्यातार्थः भावना, केचित्तु फलमात्रं धात्वर्थः आख्यातार्थः कृतिः। मीमांसकानां मते- **तत्र मण्डनमिश्राः तावत् विक्लृत्त्यादिरूपं फलमेव धात्वर्थः।**[1] अयं भावः पचादीनां धातूनां केवलं विक्लित्त्यादिरूपं फलमेव धात्वर्थः। व्यापारस्तु, आख्यातार्थः। फलस्य, अनुकूलत्व सम्बन्धेन व्यापारेऽन्वयः। कर्त्रादिरूपाश्रयस्य, प्रतीति लक्षणया आक्षेपात् प्रथमान्तपदाद्वा सम्भवति। लडाद्यर्थः, वर्तमानत्वादीनां आख्यातार्थव्यापारे एवान्वयः, समानपदोपात्तत्वात्। खण्डदेवेन- भाट्टतन्त्ररहस्ये धात्वर्थनिरूपणावसरे व्याख्यातम् ।

'तावत् विक्लृत्त्यादिरूपं फलमेव धात्वर्थः तदनुकूलसूक्तारादि रूपो, व्यापारसंघस्तु सर्वोऽपि व्यापारत्वेन प्रत्ययार्थः फलस्य च तं प्रति प्रकारत्वमित्याहुः।

फलं मात्रं धात्वर्थः स्वीकारे, ग्रामो, गमनान् इति प्रयोगापत्तेः संयोगाख्यास्य फलस्य, ग्रामे विद्यमानत्वात् ग्रामः संयोगवानिति प्रयोगापत्तिः। संयोगरूपफलस्य ग्रामे विद्यमानत्वात् । तत्र ल्युटो भावनावाचकत्वेन गमनपदस्योत्तरदेशसंयोगानुकूलव्यापारार्थकत्वात् ग्रामे व्यापारस्यविद्यमानत्वेन दोषाभावात्।

प्रभाकरमते-फलमेव धात्वर्थः आख्यातार्थो भावनेति स्वीकुर्वन्ति। भावना तु वाच्यैव न तद्विषयशाद्वबोध स्यविवादग्रस्तत्वात्। लिङ्येव परं सा आख्यातवाच्या। किं करोतीति कीदृशोयत्न इत्यर्थके प्रश्ने, 'पचति' इत्युत्तरं तु पाकवाचकधातोस्तद्विषयत्वे लक्षणयाप्युपपन्नम् । पाकं करोति इति विवरणमपि अशब्दार्थकर्मत्वविवरणवदुपपन्नमिति न तद् भावना वाच्यत्वं साधकम्। आख्यातार्थो भावनेत्यपि न युज्यते लः कर्मणिसूत्रविरोधात्। यथा कृदन्तस्थले कर्तरि कृत् इत्यनुशासनात् कृतां कर्तृवाचकत्वं भावनाया आक्षेपेण बोध : स्वीकुर्वन्ति। तद्वद् इहापि आख्यातार्थः कर्तुः आक्षेपेण, भावनायाः बोधः इति स्वीक्रियताम् किमर्थ शक्तिः कल्प्यते। यदि आक्षेपेण बोधः स्वीक्रियते तदा आक्षिप्तपदार्थस्य प्राधान्यापत्तिः। किन्तु, यदा जातौ शक्तिः अङ्गीक्रियते तदा व्यक्तेः बोधः आक्षेपेण भवति आक्षिप्तायाः व्यक्तेरिव तस्यापि प्रधान्योपपत्तेः। अतः आख्यातार्थो भावना इति न युज्यते। व्यापारमात्रं धात्वर्थः फलञ्च द्वितीयार्थः इति मीमांसकसिद्धास्तोऽपि न समीचीनः। यदि व्यापारत्वेन व्यापारवाच्यत्वं धातुत्त्वम् अङ्गीक्रियते तदा सर्वधातूनां पर्यायतापत्तेः यदि विशेषरूपेण, व्यापारस्य धातुवाच्यत्वमङ्गिक्रियते तदा त्यजगम्योः पर्यायतापत्तेश्च पूर्वदेशविभागानुकूलक्रिया त्यजेरर्थः एवं उत्तरदेशसंयोगानुकूलाक्रिया गमधात्वर्थः उभयत्रापि क्रियात्वेन साम्यात् पर्यायतापत्तिः स्पष्टैव। अतः व्यापारमात्रं धात्वर्थः न सम्भवति।

**नैयायिकमतम्**- नैयायिकेष्वपि मतद्वयं दृश्यते। प्राचीनास्तु - केवल-व्यापारमेव धात्वर्थत्वेन स्वीकुर्वन्ति फलप्रतीतिस्तु द्वितीयादिनोपपादयन्ति। आख्यातार्थः कृतिः। जन्यजनकभावस्य च विनैव पदार्थत्वं संसर्गमर्यादया

भानं संभवतीति फलमात्रं कर्म प्रत्ययार्थः। फलत्वं धात्वर्थव्यापारे विशेषणतया भासमानत्वे सति धात्वर्थजन्यत्वम्। तत्र हि द्वितीयार्थस्य फलस्य प्रकृत्यर्थे निष्ठत्वसम्बन्धेन धात्वर्थव्यापारे चानुकूलत्वसम्बन्धेनान्वयः। धात्वर्थव्यापारश्च प्रत्ययार्थे कृतौ विशेषणम्। तथा च भवति शाब्दबोधः– ग्रामनिष्ठसंयोगानुकूलव्यापारनुकूलकृतिमान् देवदत्तः। न च व्यापारमात्रस्य धात्वर्थत्वे ग्रामं गच्छति, ग्रामं त्यजति इत्यत्र समानबोधापतिः कदाचित् गमनादितात्पर्येण त्यागादिप्रयोगापत्तिः। यदि धातोः फलविशिष्ट– व्यापारे लक्षणा स्वीक्रियते तदा ग्रामं गच्छति इत्यत्र ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते, ग्रामं त्यजति इत्यादौ धात्वर्थव्यापारे ग्रामनिष्ठविभागजनकत्वमेव प्रतीयते। अतः नास्ति समानबोधापत्तिः। लक्षणास्वीकरे महद्गौरवम्। एतत्सर्वं मनसि निधाय गदाधरेणोक्तं – कर्म प्रत्ययासमभिव्याहृत त्यागगमनादिरूप तत्तफलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवल व्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोग– नियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिप्रयोगः।

**नव्यास्तु** – संयोगादिरूपफलविशेषावच्छिव्यापारो गम्यादिधात्वर्थः आख्यातर्थश्च कृतिः न तु कर्ता प्रथमान्तपदादेव तल्लाभात्। तद्धात्वर्थानधिकरणत्वेसति तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वम्। चौत्रो गच्छतीत्यादौ गम्धात्वर्थतावच्छेदकसंयोगवतः गमनकर्मत्ववारणाय सत्यन्तम्। तद्धात्वजन्यफलेत्युक्तौ पूर्वदेशविभागस्य गम्धात्वर्थव्यापारजन्यतया तद्वतः पूर्वदेशस्य गति–कर्मत्वापत्तिः। तद्वारणाय तद्धात्वर्थजन्य इति अनुक्त्वा तद्धात्वर्थतावच्छेदकेत्युक्ततं फलपदं क्रियाजन्यफलपरम्। तेन धात्वर्थतावच्छेदकीभूतं व्यापारत्वमादाय न व्यापारस्य कर्मत्वापत्तिः।

यदि फलविशिष्टव्यापारे शक्तिस्वीकारे फलस्य पदार्थैकदेशतया तत्र पदार्थान्तरस्यान्वयो न स्यात्, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति नियमात्। अन्यथा घटत्वे नित्यान्वयविवक्षयां नित्योघटः इति प्रयोगापत्तिः। किन्तु व्युत्पत्तिवैचित्र्येण प्रकृते एकदेशान्वयस्वीकारात् न दोषः।

आख्यातस्य कृतौ शक्तिः स्वीकारे लाघवं वर्तते। कथं? यदि कर्तरि शक्तिः स्वीक्रियते तदा कर्तृत्वन्नाम कृत्याश्रयत्वमिति तच्च कृतिरूपम्। एवञ्च कृतिराश्रयभेदात् अनेका तस्या एव शाक्यतावच्छेदकत्व गौरवम्। शक्यतावच्छेदकभेदात् नाना शक्तिः। अत एव आस्यातस्य कृतौ शक्तिः। किन्तु कृतौ शक्तिस्वीकारे रथो गच्छति इति प्रयोगापत्तिः। अयं भावः कृतेः अन्वयः प्रथमात्तपदोपस्थाप्ये समवायसम्बन्धेन भवति। कृतेश्चेतम मात्रवृत्तिधर्मः रथस्य अचेतनत्वात्। किञ्च अचेतनकर्तृस्थले, आस्यातस्य व्यापारे लक्षणास्वीकारेणादोषात्।

वस्तुतस्तु– फले व्यापारे च धातोः खण्डशः शक्तिद्वयम् । आस्यातस्या कायत्वमर्थः। कर्त्राख्यातस्थले फलं व्यापारे विशेषणम्। कर्माख्यातस्थले फलं व्यापारो विशेषणम् । व्यापारजन्यफलाश्रयत्वं कर्मत्वमा फलजनकव्यापारश्रयत्व कर्तृत्वम्। नैयायिकानां मते प्रथमास्तार्थ मुख्यविशेष्यक शाब्दबोधो भवति– **'वैयाकरणानां मते धात्वर्थः'**

फलव्यापारयोः धात्वर्थं स्वीकुर्वन्ति। आख्यातार्थश्च– कर्तृकर्मणी आख्यातार्थकर्तुः देवदत्तादिनाऽभेदेनान्वयः। फलञ्चानुकूलत्वसम्बन्धेन व्यापारे विशेषणम् आख्यातार्थकर्तुरपि व्यापार एव निरूपकत्वसम्बन्धेनाऽन्वयः वैयाकरणानां मते व्यापारमुख्यविशेष्यकश्च शाब्दबोधः।

भाव प्रधानमाख्यातं सत्त्व प्रधानानि नामानि । इति निरूक्तोक्तेः। तथा चोक्तं कौण्डभट्टेन–

**फलव्यापारयोर्धातुराश्रये तु तिङ स्मृतः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ।।**[2]

इत्यत्र फलव्यापारयोः इति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक् शक्तिः, एकवृन्तगतफलद्वयन्यायेन पृथक शक्तिः, एकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिति वा सूचितम्। स्तोकं पचतीत्यादौ स्तोकादिरूपकर्मणोऽभेदेन, ग्रामं गच्छति इत्यादौ ग्रामादिकर्मभेदसम्बन्ध ेनान्वयस्तु फलविशिष्टव्यापारे एव धातोः शक्तिः स्वीकारे फलस्यैकदेशत्वेन तत्र पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति न्यायविरोधात् स्तोकादिकर्मान्वयानुपपत्तेः। एतन्न्यायास्वीकारे नित्योघटः इत्यापत्तेः एवन्न्यायस्य

प्रायिकत्वस्यापि अगतिकगतित्वाच्च। न च विभिन्नपदजन्योपस्थितयोरेवा- काङ्क्षायाम् सम्बन्धेनान्वयात् । फलव्यापारयोः परस्परमन्वयापत्तिरिति वाच्यम्, तादृशनियमासिद्धेः। किञ्च न्यायमते लिङ्पदोपस्थितयोः कृतीष्टसाधनत्वयोः तिङ्पदोपस्थितकृति वर्तमानत्वयोश्च परस्परान्वयदर्शनेन सङ्कोचस्यावश्यकत्वेन, धातुतिङादि भिन्नं यदेकपदं तदुपस्थितयोरेव परस्परमनन्वयस्य तद् व्युत्पतिविषयत्वात् न च संयोगरूपे फले भेदान्वयाभिप्रायेण गमनं न स्पन्दः इति वाक्यस्य प्रामाण्यापत्तिरिति वाच्यम् अन्तरङ्गत्वाद् युगपदुपस्थितयोः फलव्यापारयोः परस्परान्वयोत्तरमेव तत्र पदार्थात्तरस्यान्वय योग्यतया, गुणानाञ्च, परार्थत्वादसम्बन्धः समत्वात् इति न्यायविरोधेन फले भेदेनान्वयानौचित्यात्। न चैवं फले स्तोकादीनां कर्मादीनाञ्चान्वयानुपपत्तिरिति वाच्यम् - क्रियाविशेषणानां कर्मत्वम् इत्याद्याभियुक्तोक्तेः फलाश्रयस्य कर्मसंज्ञाविधानाच्च तेषामन्वये बाधकाभवात्।

तिङ् आश्रयशक्तिः फलं प्रति व्यापारः प्रधानं तिङर्थः आश्रयः व्यापारे विशेषणम् । फलं विक्लित्यादि-उक्तञ्च वाक्यपदीये-

**यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः। तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्।**[3]

अत्र पारिभाषिकं फलं ग्राह्यं न तु लौकिकफलम्। तद् धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थिति-विषयत्वं फलत्वम् । यदुद्दिश्य धात्वर्थक्रियायाम्प्रवृत्तिस्तत्फलम् स्वरितञितः इति सूत्रे क्रियाफलम् । यथा-स्वर्गमुद्दिश्य यागो विधीयते। तच्च स्वर्गरूपं फलं यदि कर्ता अभिप्रैति तदा आत्मनेपदम् । एवं भविष्यद् धान्यमुद्दिश्य वपिर्विधीयते इति भविष्यद्धान्यं वपेः फलं यिद कर्तृगामि तदा आत्मनेपदम्। नहि द्रव्यलाभादिभागादेः फलम् द्रव्यलाभस्य कार्यान्तरेणापि सम्भवात् तदुक्तम् स्वरितञितः इति भाष्ये साधीयो यज क्रियाफलं कर्त्तारमभिप्रैति न चान्तरेण यजि, यजिफलं वपिं वा वपिफलं लभन्ते। यदि यागस्य स्वर्गविशेषरूपं वपेर्धान्यविशेषरूपं फलं गृह्यते तदा सकर्मकाकर्मकत्वव्यवस्था उच्छिद्येत्।

यतोहि धात्वर्थफलव्यधिकरणव्यापारवाचकत्वं समकर्मत्वम् तत्समानाधिकरणव्यापारवाच-कत्वञ्चाकर्मकत्वमिति व्यवस्था। एवञ्च धात्वर्थक्रियाप्रकृत्युद्देश्यरूपफलस्याज धातु वाच्यत्वे पत्ये शेते इत्यादौ शीङ्धातोरपि सकर्मकत्वापत्तिः। यतो हि तत्र धात्वर्थव्यापारः स्त्रियां तदुद्देश्यं फलञ्च पत्यौ इति फलव्यधिकरणव्यापारवाचाकत्वात् तस्मादत्र धातुवाच्यं फलं धात्वर्थ जन्यत्वे सति धातुजन्योपस्थितीयविषयताश्रयत्वम्। एवं त्यजि धातौ संयोगस्य गमिधातौ विभागस्य न फलत्वम् तत्र संयोगविभागयोस्तद्व्यापारजन्यत्वेऽपि, धातुजन्योपस्थितीयविषयताश्रयत्वाभावात् । व्यापारस्तु भावनाख्या साध्यत्वेनाभिधीयमानाक्रिया। उक्तञ्च वाक्यपदीये

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते।।**[4]

क्रिया द्विविधा सिद्धस्वभावा, साध्य स्वभावा, तत्र साध्यस्वभावा क्रिया तिङन्तस्थले सिद्धस्वभावा क्रिया कृदन्तस्थले प्रतीयते। क्रियात्तराकाङ्क्षाऽनुत्थापकताऽवच्छेदकरूपं साध्यत्वम्। अर्थात् अस्या, अन्वयिनी क्रिया का इति क्रियान्तराकांक्षा न भवति यथा पचति यत्र क्रियान्तराकांक्षा भवति सा सिद्धाक्रिया पाकः।

**साध्यत्वेन क्रियातत्र धातुरूपनिबन्धना। सिद्ध भावस्तु यस्तस्याः स घञादिनिबन्धना।।**[6]

**नागेशमते धात्वर्थविचारः** - फलविशिष्टव्यापारे, व्यापारविशिष्टफले च धातूनां शक्तिः। अर्थात् कर्तृप्रत्ययस्थले व्यापारस्य प्राधान्यम्, कर्म प्रत्ययस्थले फलस्य प्राधान्यम् अस्त्रि। तत्र फलस्य व्यापारे वैशिष्ट्यमनुकूलत्वसम्बन्धेन व्यापारस्य जन्यत्वसम्बन्धेन फले वैशिष्ट्यं बोध्यम्। फले व्यापारे च पृथक्शक्तिस्वीकारे व्यापारेद्देश्यफल- विधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्याऽऽपत्तिः। उद्देश्यविधेयभावेनाऽन्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात्। विशिष्टे शक्तिः। इति पक्षे न दोषः पृथगुपस्थितेरसत्त्वात् । यथा घटपदात् घटत्वप्रकारकघटविशेष्यकोपस्थितिः सत्वात् न तत्रोद्देश्यविधेयभावेनान्वयः। अतो ज्ञायते यत्र विशिष्टोपस्थित्यभावः तत्रोद्देश्यविधेयभावेनान्वयो भवति। अतो धातोरपि पृथग् पृथगुपस्थितयोः फलव्यापारयोः न उद्देश्यविधेयभावेनान्यापत्तिः।

**यद्यपि विशिष्टशक्तिवादिभतेऽपि इमे दोषाः**- विशिष्टशक्तिद्वयस्य गुरूमते धर्मद्वये शक्यतावच्छेदकत्वस्य

एवञ्चव्यापारविशेष्यकबोधे कर्तृप्रत्ययसमभित्याहरे, फलविशेष्यकबोधे कर्मप्रत्यय समभिव्यवहारे च कारणत्वस्य उपस्थितिद्वये द्विविध बोधम्प्रति हेतुत्वस्य च स्वीकारेऽतिगौरवम् तथापि प्रमाणिकगौर वस्याऽदोषात्।

**वृत्तिदीपिकामते धात्वर्थः** मौनिश्री कृष्णमोहेन, वृत्तिदीपिकायाम् – फलानुकूलो व्यापारो धात्वर्थः अंङ्गीकृतम्। तत्र फले व्यापारे च पृथक शक्तिः। कर्तृप्रत्ययस्थले व्यापारस्य विशेषता अर्थतः प्रतिभाति कर्मप्रत्ययस्थले फलस्य विशेषता मौनिकृष्णमोहेन वृत्तिदीपिकायां लिखितम्– फलांश उत्सर्गतो व्यापारोविशेषणम्। संसर्गः अर्थात् व्यापाजन्यं फलम्, किंचित्तुविषयत्वं संसर्गः।

धातुना च साध्या क्रियाऽभिधीयते। घञादिभिश्च सिद्धार्थावस्थापन्ना तत्र क्रियात्तराकाङ्क्षानुत्था-पकतावच्छेदकं रूपं साध्यत्वम्। **क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकं रूपं साध्यत्वम्।**[6]

अर्थात् यत्र अस्या, अन्वयिनी क्रिया का इति क्रियान्तराकांक्षा न भवति यथा पचति इत्यत्र प्रतीयमाना विकिलत्यनुकूलव्यापाररूपा क्रिया साध्यस्वभावा।

वस्तुतः क्रियायाः साध्यत्वेन प्रतीयमानत्वे प्रमाणन्तु अनुभव एव। तथाहि पचति, पाकः अत्रोभयस्थले धात्वर्थः विक्लित्यनुकूलव्यापाररूपोऽस्ति। किन्तु पाकः इत्यत्र एकदन्वयिनी का इत्यन्वयित्वेन क्रियान्तरस्याकांक्षा भवति। किन्तु पचति इत्यत्र क्रियान्तरस्य नापेक्षा अतः पचतीत्यत्र क्रिया साध्यस्वभावैव।

यद्यपि पाकः इत्यादौ, अपि साध्यस्वभावक्रिया प्रतीयते। अत एव पाक इत्यादि स्थले, किकर्तृकः किकर्मकः पाकः इत्याकांक्षायाः तत्र कर्त्रादिकारकाणाञ्चान्वयोपपत्तिः अन्यथा तु साध्यक्रियायामेव तदन्वयस्य सिद्धात्तित्वात् सिद्धस्वभावक्रियायां तेषामन्वयानुपपत्तिरस्त्येव। एवञ्च पाक इत्यत्र पच्धातुवाच्या क्रिया साध्यस्वभावा, प्रत्ययघञादि वाच्या च सिद्धस्वभावा।

**सिद्धान्तमजूषया सह तुलनात्मकमध्ययनम्–** वृत्तिदीपिकारेण पृथक्शक्तिवादस्य मतस्य समर्थनं कृतम्।

स्वाभिमतं विशिष्टशक्तिवादं समर्थयता पृथक् शक्तिवादं दूषयता नागेशेन खण्डशः शक्ति वादे इमे दोषाः उपन्यस्ताः।[7]

कार्यकारणभावद्वयकल्पनम्, अर्थद्वये शक्तिद्वयकल्पनं बोधजनकत्वसम्बन्धद्वयकल्पनमिति गौरवम्। वस्तुतस्तु पृथक्शक्तिवादे उपन्यस्ता इमेदोषाः विशिष्टशक्तिवाद एव परापत्तिः। न तु पृथक् शक्तिवादे।

**पृथकशक्तिवादे प्राचां मते–** उभयत्र कर्तृप्रत्ययस्थले, कर्मप्रत्ययस्थले व्यापारमुख्यविशेष्यक- बोध स्यैव स्वीकृतत्वेन उभयत्रापि धातुजन्या उपस्थितिः कारणम् । अयं भावः फलविशेषणव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणं व्यापारविशेषणफलबोधे च कर्मप्रत्ययसमभिव्याहतधातु-जन्योपस्थितिः कारणमिति न कार्यकारणभावद्वयकल्पना नागेशमते एव फलभाववच्छिन्नव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् व्यापारविशेषणफलबोधे च कर्मप्रत्ययसमभिव्याहृत-धातुजन्योपस्थितिः कारणमिति, कार्य कारणभावद्वयकल्पना अस्मिन् स्थले नागेशेन सह मतैक्यं वर्तते वृत्तिदीपिककारस्य।[8]

विशिष्टे शक्तिस्वीकारे स्तोकं पचति इत्यादौ स्तोकादीनां फले अन्वयो न स्यात् फलस्य पदार्थैकदेशत्वेन पदार्थः पदार्थेपान्वेति न तु पदार्थैकदेशेन इति न्यायविरोधात्। नित्यसाकांक्षास्थले एकदेशान्वयस्वीकारेऽप्यत्र स्वीकारे न कोऽपि दोषः।

**संदर्भ–**

1. पा. सू. 13/3/1 2. प. ल. म. पू. सं. 55 3. भाट्ट–तन्त्ररहस्य पृ. सं. 58 4. भाहतन्त्र रहस्य पृ. सं. 58
5. भट्टतज रहस्य पृष्ठ सं. 58 6. व्यत्पत्तिवाद पृष्ठ सं. 186 7. व्युत्पत्तिवाद– 8. पा. अ. सू. 1,3,72
9. वृत्ति. दी. पृष्ठ सं. – 16

शोधच्छात्रः, राष्ट्रियसंस्कृतसंस्थानम्, , गङ्गानाथ–झा–परिसरः,प्रयागराजः

# वेदोऽखिलोऽन्तर्निगूढ-मानवमूल्य-रत्नाकरः

- शैलेन्द्रकुमार

वेदः खलु अनन्तज्ञान-निधिः। संसारस्य सर्वविधं लौकिकम् अलौकिकं वा ज्ञानमन्तर्निगूढं विद्यते। यतः भारतीयार्षमते वेदोऽपौरुषेयः, पारमात्मिकसन्देशस्तस्माद् वेदे आध्यात्मिकज्ञानानुसन्धानं वाऽलौकिकज्ञानानुसन्धानं हि युक्तिसङ्गतं, समीचीनं चास्ति।

साम्प्रतं सार्वभौम-मानवसमाजस्य अधःपतनस्य, विनाशस्य प्रधानो हेतुर्मानवमूल्यानां ह्रासः। मानवमूल्यानां ह्रासान्मानवः मानवदेहधारी सन्नपि मानवो नैवास्ति। यथोक्तमपि नीतिशास्त्रीयसुभाषिते-

**येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मृत्युलोके भुविभारभूताः, मनुष्यरूपेण मृगाश्चरन्ति॥**

अतः एतदवधारयितुं शक्यते यद् विद्या-तपो-दान-ज्ञान-शील-गुण-धर्मादयो हि मानवमूल्यानि। एषामेव मानवमूल्यानाम् अभावे समग्र-मानवसमुदाय एव सम्प्रति पशुत्वमादधाति।

अथात्रास्मिन् प्रसंगे मानवमूल्यमिति पदयुगले मानवशब्दः एव प्रथमं सम्यगध्येतव्यः।

व्याकरणदृष्ट्या मनोरपत्यं मनोर्जातो वेत्यर्थे मनु शब्दादण् प्रत्यये कृते मानवशब्दो निष्पद्यते। साहित्यिकविवेकदृष्ट्या एवं वक्तुं शक्यते-

**''मत्वा कर्मणि सीव्यति यः मनुष्यः, मानवो'' वा।**

**''को हि मानवः'' इति विचारणायाम् ऋग्वैदिकऋषिः प्रतिपादयति**

**''तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्षधिया कृतान्।**
**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्॥** - ऋग्. 10.53.6

मन्त्रस्यास्य प्रमुखं प्रतिाद्यमस्ति- 'मनुर्भव'। अत्र ऋषिमत्या ''मनुरेव मानवः''। तस्मान्मन्त्रे ''मनुर्भव'' इति पदेन 'मानवो भव'' इति ऋषेरभिप्रेतम्। वैदिकऋषिर्मानवत्वधारणायात्रीणि सोपानानि अवर्णयत्। इमानि सोपानानि अस्मिन् मन्त्रे प्रतिपादितानि- तत्र प्रथमं सोपानम्- सूर्यानुसरणम्, द्वितीयं सोपानम् - ज्योतिष्पथिकता, तृतीयञ्च सोपानम् - ऋजुता

अत्र यथाक्रममेकैकस्य सोपानस्य क्रमशः विवेचनं प्रस्तूयते। तत्र आदिमं सोपानम्।

**सूर्यानुसरणम्** - सूर्यः सदैव अविरामगत्या अतन्द्रितो निरन्तरं चरति। सूर्यः स्वीयावृत्त एव स्थितश्चरन् स्वप्रकाशेन सौरमण्डलं, सकलं भूमण्डलं चापि प्रकाशयति। ग्रहोपग्रहांश्चाकर्षति। सूर्यः निष्पक्षरूपेण यथायोग्यं सर्वान् प्राणिनः जड-चेतनान्, वनस्पतीन्, पत्राणि पुष्पाणि तरुलताश्चापि विकासयितुं प्रमोदयितुं वा सदैव समभावेन चेष्टमानो भवति। तथैव मानवः सदैव स्वीयकर्तव्यधुरो स्थितः स्वकीय-धर्म-ज्ञान-चरित्रप्रकाशेन

सार्वभौम-मानवतां प्रकाशयेत्, स्वकीय-परमपवित्र- मानवीय- सेवाभिर्मानवमात्रं वा प्राणिमात्रं वशे कुर्यात्।

**ज्योतिष्पथिकता**- द्वितीय: सोपानोऽस्ति ''ज्योतिष्पथिकता''। पूर्वजै: ऋषिमुनिभिर्मेधाविभिर्ये ज्योतिर्मयाश्चरित्र-पथा: सम्पादितास्तेषामेव तदनुरूपमेवाचरणं ज्योतिर्मयानां पथां संरक्षणमस्ति। मानव: स्वयमेक: विवेकी प्राणी अस्ति। मानवै: पूर्वज-मेधावि-सुनिष्पादित-मानवजीवनस्य ज्योतिर्मय-चरित्रमार्गाणां रक्षा करणीया। मानवैस्तथा प्रयत्नाभ्यास: करणीय: यथा ते ज्योतिर्मयचरित्रमार्गा: विलुप्ता: न स्यु:। मेधाविजनैर्ये मानवेभ्य: जीवनेऽनुभूतादर्शाणि स्थापितानि, याश्च मानवीय-मर्यादा: संस्थापिता: तत्सर्वं हि ज्योतिर्मयचरित्रमार्ग:, तेनैव चरित्रमार्गेण स्वयं जीवनयापनम्, अन्यांश्च प्रेरणमित्येव ज्योतिष्मत: पथो रक्षणम्।

**ऋजुता** - ऋजुताया अभिप्राय:- भाव-व्यवहार-कर्मचारित्रादिषु छलकपटराहित्यम्। मन्त्रद्रष्टा ऋषि: सन्दिशति- ''जोगुवाम् अनुल्बणम् अप: वयत''- अर्थात् पूर्वजोपदेष्टृषाम् ऋषिमुनीनाम् अजटिलानि सरलानि ऋजूनि कर्माणि साध्यानि। पूर्वजमहापुरुषै: साधितानि यानि ऋजु-ऋतकर्माणि, तानि सर्वाणि सर्वमानवै: सास्थं सश्रद्ध सावधानतयाऽप्रमत्तभावेन पालनीयानि। श्रेष्ठमहापुरुषाणां सकलकर्माणि-कायिक- वाचिक-मानसिकानि सर्वाण्येव अनुल्वणानि अर्थात् छल-कपटरहितानि ऋजुतामयानि सार्थकोद्दिष्टानि च भवन्ति। इत्थमेभिस्त्रिभि:-सूर्यानुसरण-ज्योतिष्पथिकत्व- ऋजुत्वविभूषितैर्धर्मै: मानवचरित्रे मानवत्वं प्रकाश्यते। एतादृश-मानवताया: समुन्नयने वाऽभ्युदये वा यानि मूल्यानि सहायकान्युपकारकाणि वा भवन्ति, तान्येव मानवमूल्यानि भवन्ति। अत्र मूल्यपदमपि चिन्तनीयं, यत् किं हि खलु मूल्यम्?

पाणिनीयाष्टाध्याय्या: अनुशीलनेनैतज्ज्ञातुं शक्यते यत्- मूल्यं तद् भवति यन्मानवस्य समूलमुन्नयनेऽभ्युदये वा सहायकं भवति। ''**मूलमस्याबर्हि**'' - इत्यष्टाध्यायीस्थसूत्रानुसारं येन आचरणेन कस्यचिद् वस्तुन: गुणस्य वा समूलम् आबृंहणं विकासो वा भवति तन्मूल्यं भवति। एतत्सूत्र-व्याख्यानुसारं येन आचरणेन मानवताया: समूलम् अभ्युत्थानं, समुन्नयनमभ्युदयो वा ज्ञायेत तन्मानवमूल्यं भवति। अत: एवं वक्तुं शक्यते- अहिंसा, परोपकार:, अचौर्यं, दया, क्षमा, करुणा, सौहार्दं मैत्रीप्रभृतयो ये गुणास्तैर्मानवताया: अभ्युदयो भवति, विकासो भवति, अत: इमे गुणा एव मानवमूल्यपदेनाभिधातुं शक्यन्ते।

वेदे ईदृशगुणानामाचरणस्य सन्देशो विद्यते यै: सार्वभौम-सुखशान्तिस्थापनं संरक्षणं वाऽपि कर्तुं शक्यते। वेदे सामाजिक-सम-रसताया: विश्वबन्धुत्वभावस्य सुस्पष्टसन्देशोऽस्ति। यजुर्वेदे ऋषि: प्रार्थयति-

**''दृते! दृंह मा, मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।**

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।**

**मित्रस्य चक्षुषा समीक्षामहे।** - यजु. 36/18

अस्मिन् मन्त्रे ऋषि: सर्वप्रथमं परमात्मानं प्रार्थयति-

प्रभो! मां दृंह=अर्थान्मां दृढं बलवन्तं कुरु। यतो हि सर्वभूतेषु सर्वप्राणिषु मैत्रीभावदृष्टिर्दुष्करा। यतो हि प्रायोऽयं मनुष्य-स्वभावो यत् येन यस्य स्वार्थसिद्धिर्भवति, वा हितसिद्धिर्भवति, तयोरेव प्राय: मैत्रीभावो वा आत्मीयता भवति। ईदृशी या स्वार्थाधारिता मैत्री सा मानवमूल्यरूपेण न स्वीकर्तुं शक्या, यत: सा एतादृशी मैत्री पक्षपातपूर्णा, राग-द्वेषयुक्ता भवति। येन स्वार्थसिद्धिर्भवति, तत्र रागो भवति, तेनैव च मैत्री भवति, अन्यत्र येन स्वार्थपूर्तिर्न भवति, तत्र द्वेषो भवति, इत्थं मानव-मनसि सकृदेव राग-द्वेषौ प्रादुर्भवत:, तेन च मनोमलिनं दूषितं वा भवति। सा एव मित्रदृष्टिर्मानवमानवमूल्यं भवितुमर्हति, यया मनो निर्मलं भवत्। यजुर्वेदीयेऽस्मिन् मन्त्रे या

प्रार्थना कृता- ''दृते! दृंह मा'' - अत्र अयं भावोऽन्तर्निगूढः यत्- स्वार्थ विनाऽपि निष्पक्षरूपेण सर्वप्राणिभिः सह या मित्रता साध्यते, सैव याथार्थ्येन मौलिकी मैत्री अस्ति। एतादृश्यैव मैत्र्या चित्त-प्रसादनं वा मनोनैर्मल्यं भवति, यतस्तत्र रागद्वेषौ न भवति। ईदृश-मैत्रीभावस्य मूलेऽहिंसैवास्ति। इमां वेदोक्तमैत्री-भावनाम् अवलम्ब्यैव लौकिकसाहित्ये कविभणितिः प्रसिद्धा- **''अयं निजः परो वेति गणना लघुचेतसाम्**

**उदारचरितानां तु वसुधैव कुटुम्बकम्॥''**

अतः एवं वक्तुं शक्यते यत् अहिंसा हि श्रेष्ठं मानवमूल्यमस्ति। अथर्ववेदेऽप्युक्तं- ''मा हिंस्यात् सर्वभूतानि''। भूतानां हिंसनं हि समूलं मानवताविनाशनमस्ति। अहिंसयैव सार्वभौममानवताया विकासो भवितुमर्हति।

अत्रैतदपि ध्येयं यत् काम-क्रोध-लोभ-मोहेर्ष्याऽसूयादिविकारा अपि हिंसात्मका एव सन्ति। अतः अहिंसात्मकं यन्मानवमूल्यं, तत्र उपर्युक्ताः काम-क्रोधलोभमोहादयः सर्वथा हि परिहेयाः, यत एषां प्रभावेणापि अहिंसात्मकमानवमूल्यस्य ह्रासो भवति। उपर्युक्त-सर्वविकाराणां निन्दनीयता तिरस्करणीययाः च ऋग्वेदे, अथर्ववेदेऽपि च प्रतिपादिता-

**''उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम्।**

**सुपर्णयातुमुत गृध्रयातुं दृषदेव प्रमृण रक्ष इन्द्र''।** -ऋग्. 7.104.22, अथर्व. 8.4.22

अस्मिन् मन्त्रे षड् राक्षसीयवृत्तीनां वर्णनपुरःसरं वैदिकऋषिणा प्रतिपाद्यते-

''उलूकयातुम् अर्थाद् उलूकवृत्तिस्त्याज्या। उलूकः प्रकाशवैरी भवति। प्रकाशवैरस्य अभिप्रायः अविवेकः। उलूकः अविवेकी तमः प्रियश्च भवति। मानवः प्रकाशमयो भवति, प्रकाशाभाव एव, तमो वाऽन्धकारो भवति। अन्धकारेण तमसाऽपि मानवमूल्यस्य विनाशो भवति। अतः एषा उलूकवृत्तिस्त्याज्या। एषा उलूकवृत्तिः राक्षसीयवृत्तिः मानवैः परिहर्तव्या।

'शुशुलूकयातुं जहि'' अर्थात् शुशुलूकवृत्तिः परित्याज्या। शुशुलूकः उलूकस्यैवैका लघ्वी जातिः। शुशुलूकः परमक्रोधी भवति। क्रोधेऽविवेको भवति। क्रोधोऽपि हिंसायाः रूपं भवति। अतः क्रोधोऽपि हिंसात्मकत्वान्मानवमूल्यविनाशकः, अतः परित्याज्यः।

तृतीयावृत्तिरस्ति श्ववृत्तिः, अत एव मन्त्रे उपदिष्टं- ''श्वयातुं जहि''। अर्थात् कुक्कुरस्वभावोऽपि परिहेयः। जातिद्रोहः, चाटुकारिता मिथ्यास्तुतिः- श्ववृत्तिः इमे जातिद्रोहादिविकाराः मानवता-विरोधिनः। तस्मादिमे विकाराः परित्याज्याः।

चतुर्थी त्याज्यावृत्तिरस्ति कोकवृत्तिः कोकश्चक्रवाकः। अयं चक्रवाकः कामी भवति। कामवृत्तिरप्येका विकृतिः। कामो हि रागस्य वाऽऽसक्तेरेव रूपम्। यतः आसंगादेव कामः (इच्छा) भवति। यथोक्तं श्रीमद्भगवद्गीतायाम्-

**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते।**

**क्रोधाद् भवति सम्मोहः, सम्मोहात् स्मृतिविभ्रमः॥**

**स्मृतिभ्रंशाद् बुद्धिनाशः, बुद्धिनाशात् प्रणश्यति॥** -श्रीमद्भगवद्गीता 2/62, 63

रागः कामो वा सर्वविकाराणां मूलम्। अत एव ऋग्वैदिकः ऋषिर्दिशति- कोकोऽतिकामासक्तो भवति। परपुरुषगमनं वा परस्त्रीगमनं हि कोकवृत्तिः। एषाऽपि कोकवृत्तिर्मानवताविरोधिनी अतः कोकवृत्तिः

परित्याज्या।

सुपर्णः श्येनो भवति। श्येनोऽहंकारी परोत्पीडकश्च भवति। अहंकारोऽत्याचारश्च सुपर्णवृत्ती स्तः। सुपर्णवृत्तित्वं मानवताविरुद्धम्। अनयाऽपि वृत्या मानवमूल्यस्य ह्रासो वा विनाशो भवति।

षष्ठी राक्षसीया वृत्तिरस्ति गृध्रवृत्तिः। गृध्रः परमांससेवी महालोभी असन्तोषी च भवति। शोषणं धनलोलुपता च गृध्रवृत्तिर्भवति। पर-प्रवंचको भवति गृध्रः। अस्मादेव ईशावास्योपनिषदि समुपदिष्टं मुनिना- **मा गृधः कस्यचिद् धनम्।**

परधनग्रहणमपि हिंसामूलकं भवति। इत्थं निष्कर्षोऽयं प्राप्तुं शक्यते यत् उपर्युक्ते ऋग्वेदीये मन्त्रे वर्णिता ये षड् राक्षसाः- काम-क्रोध-लोभ-मोहेर्ष्यादयो ये भावविकारास्ते निश्चितरूपेण मानवतायाः विरोधिनः, अतो मानवमूल्यानां विनाशकाः सन्ति। अन्यत्रैकस्मिन् प्रसंगे ऋग्वेदे मर्यादा-संरक्षण-व्याजेनापि मानव-मूल्यानां समुल्लेखः कृतोऽस्ति। वेदमन्त्रोऽस्ति-

**सप्तमर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्।**

**आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे सरुपेषु तस्थौ।** -ऋग्.10.5.6,अ.5.1.6

इमाः मर्यादाः सन्ति-चिन्तनमननं, दृष्टिः, स्पर्शः, भाषणं, श्रवणं, भक्षणं, भावना च।

उत्तमविचाराः अर्थाद् यत्र काम-क्रोध-लोभ-मोहमदानां प्रभावो न स्याद्-एतादृशाः ये विचारास्त एव मानवीर्यमर्यादाः मानवमूल्यानि वा इमे सर्वे विचाराः मनोबुद्धि-सम्बद्धाः। अतः विचाराणां मर्यादा मनोबौद्धिकमर्यादाः वा मनोबौद्धिकमूल्यानि सन्ति। एतान्यपि मूल्यानि मानवताया अभ्युत्थाने उपकारीणि सहायकानि च सन्ति।

द्वितीया मर्यादाऽस्ति सुदृष्टिः तृतीया चास्ति सुश्रुतिः। वस्तुतः सुदृष्टि-सुश्रुतिभ्यां हि सुविचारा प्रादुर्भवन्ति। नेत्रयोर्मर्यादा वर्तते सुदृष्टिः, श्रोत्रयोश्च मर्यादाऽस्ति सुश्रुतिः। अतः सुदृष्टिः सुश्रुत्योर्मर्यादायाः पालनेन मानवता समुन्नताऽभ्युन्नता वा भवितुमर्हति। एतदर्थमेव श्रोत्रम् श्रोत्रम्, ''चक्षुः चक्षुः'' इति मन्त्राभ्यां श्रोतनेत्रेन्द्रियस्य पावित्र्यार्थं प्रार्थना कृता।

एतदर्थमेव ऋषिणा प्रार्थना कृता- **''भद्रं कर्णेभिः शृणुयाम, भद्रं पश्येमाक्षभिः''**

अत्र भद्रश्रुतेः, भद्रदृष्टेश्च प्रार्थना कृता। एवमेव सुभाषण-सुभक्षण-सुस्पर्श-सुभावनादिमर्यादाः। इमाः सर्वा मर्यादाः मानवमूल्यानि सन्ति। एभिः मानवताया अभ्युदयो विजयश्च साधयितुं शक्यते। अतो वक्तव्यं-वेदोऽखिलो मानवमूल्य-रत्नाकरः।

- शोधच्छात्रः साहित्यविभागः
राष्ट्रियसंस्कृतसंस्थनम् (मानितविश्वविद्यालयः),
लखनऊपरिसरः, लखनऊ

# वैदिकवाङ्मये नैतिकशिक्षायाः महत्त्वम्

- अखिलेशकुमारमिश्रः

वैदिकवाङ्मये जगतः सर्वेषां प्राणिनां कल्याणभावना निहिता अस्ति । जीवनं प्रति उदात्तविचारधारामधिकृत्य वेदेन मानवाय मानवतायाः नैतिकतायाश्च मार्ग दर्शितम् । सर्वेषाङ्कृते सुखसमृद्धेः आनन्दस्य च कामना वेदस्य परमधर्मोऽस्ति। अतः मानवीयजीवनमूल्यस्य नैतिकतायाश्च नानाविधाधारितत्त्वानां वर्णनं वैदिकवाङ्मयेषु सर्वत्र धूमवह्निवत् व्याप्तमस्ति।

परं साम्प्रतिके समाजे नैतिकतायाः पतनेन किं कर्त्तव्यं किं वा अकर्त्तव्यम् इति विषये मानवाः सामाजिकसिद्धान्तान् विस्मरन्तः सन्तः कार्यं कुर्वाणाः दृश्यन्ते। मानवाः शारीरिकसुखं सर्वोपरि इति विचिन्त्य अन्धवद् भौतिकवादं स्वीकृतवन्तः तथा च मानवीयमूल्यं विश्वमानवान् शासयति विश्वशान्तिञ्च स्थापयति । परन्तु नैतिकशिक्षां विना हिंसा, द्वेषः, परस्त्रीलुण्ठनम्, अनैतिकता इत्यादयः समाजे वर्धमानाः सन्ति । सर्वतो पाश्चात्यसभ्यतायाः अन्धानुकरणेन नैतिकता निम्नगा सञ्जाता । वैश्विककरणसमाजे नैतिकबोधं विना मानवीयमूल्यबोधं विना वा इदानीं समाजे सदाचारस्य, सहानुभूतेः शीलस्य, विनयस्य च स्थानमेव नोपलभ्यते । भौतिकसुखलिप्सायां सत्यां परधनप्राप्तौ विश्वशान्तेः, विश्वप्रेम्णः, विश्वधर्मस्य, मानवधर्मस्य च भावना एव न मानसपटलं जागरयति ।

अत एव विश्वशान्तेः, विश्वप्रेम्णः, विश्वधर्मस्य, च स्थापनाय नैतिकशिक्षा- नितान्तमावश्यकी वर्त्तते । स्वकीय निबन्धे वैदिकवाङ्मयेषु नैतिकशिक्षायाः किं तावद् वैशिष्ट्यं वर्त्तते तद् वैशिष्ट्यम् अधः प्रस्तौमि। नी धातोः क्तिन् प्रत्ययकृते सति नीति शब्दः निष्पद्यते । नीतौ भवः नैतिकः । मर्यादामनतिक्रम्य इति विग्रहवाक्यानुकूलं यद् शब्दरूपं तत् भवति यथामर्यादम्। एतदेव नैतिकं तत्त्वं भवति। तन्नैतिकतत्त्वमेव मानवतायाः निर्माणं करोति । सभ्यसमाजस्य निर्माणाय नैतिकशिक्षायाः ग्रहणं सर्वेषां कृते नितान्तमावश्यकं तत्त्वं वर्त्तते । अतः अद्यत्वे जीवनस्य सर्वाङ्गीणोत्थानाय ईदृशं नैतिकशिक्षाऽपेक्ष्यते यया मनुजो मानवीयैर्गुणैरनुप्राणितो भूयात् । निखिले वैदिकवाङ्मये अनेकेषु स्थलेषु नैतिकशिक्षासन्दर्भे उपदेशाः विद्यन्ते । तत्र नैतिक तत्त्वेषु वैदिकवाङ्मयीयम् उपदेशं सर्वग्राह्यं वर्त्तते । तथाचोक्तं यजुर्वेदे -

वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि नाभि ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्रां स्ते शुन्धामि ।।[1]

वैदिकयुगे चरित्रस्य महत्त्वं भूयशः स्वीकृतमासीत् । चरित्रं तु नितान्तं प्राबल्यं भजते । परोपकारः सत्यभाषणाय, दयादाक्षिण्यादिगुणाः चरित्रनिर्माणाय प्रथमसोपानवद् वर्त्तते । वस्तुतः वैदिकयुगीनं चरित्रमादर्शभूतमासीत् । यतोहि आचारहीनं वेदाः न पुनन्ति - आचारहीनं न पुनन्ति वेदाः'' इति प्रसिद्धमासीत् । वैदिकयुगे प्रत्यक्षरुपेण परोक्षरूपेण च चारित्रिकविकासाय अनेके सन्दर्भाः प्राप्यन्ते। शिष्यस्य गुरूणा सह व्यवहारः, पतिपत्न्या व्यवहारः, भ्रातुः भ्रात्रा व्यवहारः परस्परव्यवहारः च अपि निर्दिष्टः वर्त्तते वेदे । यथोक्तमथर्ववेदे-

स्वस्ति मात्र उत पित्रे नो अस्तु ।[2] अपि च – **अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।**

**जायापत्ये मधुमतीं वाचं वदतु शान्तिवान् ॥**

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।**

**समयञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥**[3].

अपि च – यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृणं बृहस्पतिर्मे तद्धातु । शं नो भवतु भुवनस्य यस्पतिः।[4].

द्यौः शान्तिरन्तरिक्षशान्तिः पृथिवी शान्तिराप: शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।।[5].

दृते दृंघ ह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।।[6].

वेदे सर्वत्र नैतिकं तत्त्वं संस्पृष्टं वर्त्तते । सदाचरणम् एव नैतिकता वर्त्तते । आचरति एनम् अनेन वा इति आचरणम् इति व्युत्पत्या आचारशब्दः निष्पद्यते । अयमेव शब्दः नैतिकम्, धर्म, कर्तव्यः, इत्यादयः शब्दाद् अभिधीयते । ऋग्वेदे नैतिकशिक्षासम्बन्धिनः सप्तमर्यादोल्लेखः वर्तते। तद्यथा – **सप्त मर्यादाः कवयस्ततक्षुः स्ता सामेकामिदभ्यंदुरो गात् ।**

**आयोर्ह स्कम्भ उपमस्य नील पथां विसर्गे धरुणेषु तस्थौ ॥**[7].

अभिप्रायोऽयम् ऋग्वेदे इत्थं प्रतिपादितं यन्नैतिकशिक्षायाः कृते सप्तमर्यादानामुल्लेखङ्कृतं वर्त्तते । तद्यथा– स्तेयं न कर्तव्यम्, व्यभिचारं न कर्तव्यम्, मुहुर्मुहुः दुराचारं न करणीयरः , तथा कृते सति अनृतमुक्त्वा तं पापं न प्रकाशनीयम् । एतेषां सप्तमर्यादानामनुरूपं मानवानामाचरणं भवेद् इति निर्देशः अवगम्यते । एतासु मर्यादासु यदि एकापि मर्यादा भग्ना भवति तदा मानवः पापीयान् भवति । अनेन ज्ञायते यत् प्राचीनकाले या शिक्षा व्यवस्था आसीत् सा सर्वोत्तमा प्रशंसनीया चासीत् । यतोहि एतेषां मन्त्राणां वा प्राचीनपाठ्यक्रमाणामध्यापनेन छात्रेषु नैतिकगुणानां विकासः स्वयमेव अध्ययनानन्तरं प्रस्फुटः भवति स्म । अतः पाठ्यक्रमतः पृथग् नैतिकशिक्षाप्रदानस्य आवश्यकता नैव जायते । एवमेव यजुर्वेदे अन्यत्रापि वर्णितं समुपलभ्यते। यथा–

**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धन्नम् ।** [8]

अपि च– **कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**

**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥**[9]

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम॥** [10]

**हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम् ।**

**योऽसावादित्ये पुरुषःसोऽसावहं खं ब्रह्म ॥**[11]

एतेषु मन्त्रेषु सदाचरणस्य सत्कर्मणो वा विषये विशद्विवेचनं संदृश्यते । यथा तेन त्यक्तेन इत्यत्र त्यागभावनायाः तथा च अन्येषां सम्पत्तिनामुपरि वक्रदृष्ट्या लोभदृष्ट्या वा न दर्शनीयम्। यत् किमपि ईश्वरेण

प्रदत्तं वर्तते, तस्य त्यागपूर्वकं ईर्ष्यारहितं लोभरहितं वा उपभोगः करणीयः। अर्थात् ममेदमिति धियं त्यज। यतोहि सम्पूर्णे संसारे ईश्वरस्य सत्ता वर्त्तते। अतः सर्वेषां हितं हृदि संस्थाप्य ईश्वरवचनस्मरणपूर्वकमुपभोगः कर्त्तव्यः। एवमेव कुर्वन्नेवेह कर्माणि इत्यस्मिन् मन्त्रे कथयति यत् सत्कर्मकुर्वति सति मानवाः शतायुः भवेदिति मन्त्रस्यास्य अभिप्रायो विद्यते । अथ च अग्ने नय सुपथाराये इत्यस्मिन् मन्त्रे रहस्यमुद्घाटनावसरे निगदितं वर्त्तते यद् हे अग्ने सत्पथे नय कुमार्गे प्रतिरोधं कुरु इति । अपि च सुमति सम्बन्धिविषये वेदः उद्घोषयति ख्रमहस्ते विष्णो सुमतिं भजामहे ।[12] उर्वी गभीरा सुमतिष्ठे अस्तु ।[13] देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।[14] एवं विश्वबन्धुत्वभावनायाः विषये कथयति वेदः यत् – **दृते दृ ह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।**

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।**[15]

एवञ्च – **सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथा पूर्वे संजानाना उपासते ॥**[16]
**समानी व आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनो यथा वः सुसहासति ॥** [17]

मानवस्य सच्चरित्रस्य नैतिकशिक्षायाः उपदेशः अयमेव वर्त्तते । अथ च अस्माकं जीवनं कथं भवेत् इत्यस्मिन् विषये उपदिशति वेदः यत् मधुरतापूर्णसमग्रजीवनं भवेत् । यथा–

**मधुमन्मे निक्रमणं मधुमन्मे परायणत!।**
**वाचा वदामि मधुमद् भूयासं मधुसंदृशः ॥**[18]

न केवलमेतावता अपितु उपनिषदि नैतिकशिक्षासम्बन्धिनः बहवः उपदेशा सन्ति। उपनिषत्काराणां मते मानवव्यक्तित्वस्य पञ्चस्तराः सन्ति – शरीरं, प्राणाः, मनः, बुद्धिः, आत्मा च । नैतिकशिक्षायाः प्रयोजनं मानवजीवनस्य पञ्चस्तरान् व्यवस्थितया विधाय सदाचारिणः श्रेष्ठमानवस्य निर्माणमेवास्ति । नैतिकशिक्षायाः अभिप्रायोऽस्ति – विवेकबुद्धेः जागरणम्, सदाचरणस्य समुत्कर्षः, सद्विचाराणां समुन्नयनम्, मानवस्वभावस्य संशोधनञ्च। यया शिक्षया चतुर्दिक् प्रसृतस्य विश्वस्य समेषां प्राणिनां जीवनेऽनुस्यूतायाः परमसत्तायाः शक्तेः संदर्शनं सैव खलु नैतिकी शिक्षा कथयितुं शक्या । उपनिषत्सु तैत्तिरीयोपनिषदि शिक्षावल्लीनाम्नी एका वल्ली वर्त्तते यत्र नैतिकशिक्षासम्बन्धिनः बहवः अंशाः विद्यन्ते । तत्र अध्ययनानन्तरं गुरुकुलाद् गृहस्थाश्रमं प्रविविक्षून् शिष्यान् आहूय गुरुः मन्त्रौषधिजलैः स्नापयित्वा, पुनस्तेभ्यः कृतस्नानेभ्यः अधोवर्णितैः जीवनकलासूत्रकल्पैः तैत्तिरीयोपनिषदः अनुवाकैः प्रबोधं करोति। यथा – सत्यं वद । धर्म चर । स्वाध्यायान्मा प्रमद । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम् । स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम् ।

मातृ देवो भव । पितृदेवो भव । आचार्य देवो भव । अतिथि देवो भव । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि । ये के चास्माच्छ्रेयांसो ब्राह्मणाः, तेषां त्वयाऽऽसने न प्रश्वसितव्यम् । श्रद्धया देयम्। अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् ।

एवमुपासितव्यम् । एवमु चौतदुपास्य्।[19]. वस्तुतः एते उपदेशाः नैतिकशिक्षासम्बन्धिनः एव सन्ति ।

एतेषां वेदोपनिषद्वाक्यानाम् आलोडनेन अनुसन्धानेन वा निष्कर्षरूपेण वक्तुं शक्यते यद् एतेषां ग्रन्थानामध्ययनान्तरं कर्त्तव्याकर्त्तव्यस्य सदाचरणस्य धर्मार्थकाममोक्षादिचतुर्वगस्य च प्राप्तिः वैदिकवाङ्मयाध्ययनेनैव सञ्जायते । इति तु वर्त्तते संस्कृतस्य एकस्य पक्षस्य उदाहरणम् । एतदतिरिक्तमपि अन्येषु विविधग्रन्थेषु विशद्विवेचितं वर्त्तते । अतः वक्तुं पारयामि यद् एतेषाम् अध्ययनानन्तरं पृथक्तया नैतिकशिक्षाप्रदानस्य प्रश्नः एव न समुपस्थितो भवति । अतः पुनः वैदिकशिक्षायाः प्रत्युन्मुखाः भविष्यामश्चेत् सर्वासां समस्यानां समाधानं भविष्यतीति मे मतिः। ।।इत्यलम्।।

**सन्दर्भग्रन्थसूचयः -**

1. यजुर्वेदः - 6.14, पं. रामकृष्णशास्त्री , चौखम्बा विद्याभवन वाराणसी, 2005
2. अथर्ववेदः - 1.31.4, पं. रामस्वरूपशर्मा गौडः , चौखम्बा विद्याभवन वाराणसी, 1995
3. अथर्ववेदः - 3.30.1-3, पं. रामस्वरूपशर्मा गौडः , चौखम्बा विद्याभवन वाराणसी , 1995
4. यजुर्वेदः - 36.2, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
5. यजुर्वेदः - 36.17, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
6. यजुर्वेदः - 36.18 पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
7. ऋग्वेदः - 10.5.6 पण्डित रामगोविन्द त्रिवेदी , चौखम्बा विद्याभवन वाराणसी ,2011
8.यजुर्वेदः -40.1, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
9.यजुर्वेदः 40.2, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
10.यजुर्वेदः 40.16, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
11. यजुर्वेदः - 40.17, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
12. ऋग्वेदः - 1.156.3, पण्डित रामगोविन्द त्रिवेदी, चौखम्बा विद्याभवन वाराणसी, 2011
13. ऋग्वेदः - 1.24.9, पण्डित रामगोविन्द त्रिवेदी, चौखम्बा विद्याभवन वाराणसी, 2011
14. यजुर्वेदः - 25.15, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
15. यजुर्वेदः - 36.18, पं. रामकृष्णशास्त्री, चौखम्बा विद्याभवन वाराणसी, 2005
16. ऋग्वेदः -10.191.2, पण्डित रामगोविन्द त्रिवेदी, चौखम्बा विद्याभवन वाराणसी, 2011
17. ऋग्वेदः - 10.191.4, पण्डित रामगोविन्द त्रिवेदी, चौखम्बा विद्याभवन वाराणसी, 2011
18. अथर्ववेदः 1.34.3, पं. रामस्वरूपशर्मा गौडः, चौखम्बा विद्याभवन वाराणसी, 1995
19. तैत्तिरीयोपनिषद् - शिक्षावल्ली - 1, अनुवाक सं. 11, गीताप्रेस , गोरखपुर सम्वत् - 2068

सहायकप्राचार्यः , स्नातकोत्तरवेदविभागः, कामेश्वरसिंहदरभङ्गा
सम्पर्कसूत्रम् -७६३१२७४३६७
Email – akhimishra111@gmail-com

# वेदापौरुषेयत्वम्

– **योगेश पाण्डे**

प्राय: अस्माकं सर्वेषां शास्त्राणां साहित्यकलासभ्यतासंस्कृत्यादीनां मूलो वेद एव अत्र नास्ति कश्चित् संदेह:। वेदा: ज्ञानराशिकारणात्, व्यापकतत्त्वदर्शनादिभि: समलङ्कृतत्वात् सम्पूर्णविश्वस्य विदुषां चेत: आकृष्टवन्त:। वेदानां ज्ञानविज्ञानमेव दृष्ट्वा प्राय: समग्रविद्वत्समाजेन एकस्वरेण भारतस्य महानता श्रेष्ठता च अङ्गीकृता। तत्कारणादेव 'ऋग्वेद:' अद्यापि विश्वसाहित्यस्य प्राचीनतमो ग्रन्थो स्वीक्रियते। केवलं भारते सनातनधर्ममूलवेदेनैव गौरवोऽयं प्राप्त: **''वेदोऽखिलो धर्ममूलम्''**। पुन: श्रुतिवाक्यैरपि स्पष्टं वर्तते यत्सर्वजनाभ्युत्थानाभ्युदयार्थश्च वेदएवेति।

कैश्चिन्मन्यते यत् सर्वविषयात्मक:, सर्वविद्यात्मक:, सर्वज्ञानप्रकाशात्मकश्च वेद:। प्राचीनभारतीयार्षसम्प्रदायानुसारेण दृढविचारानुसारञ्च वेद: परब्रह्मपरमात्मन: नि:श्वासरूपेण विनिर्गत:। ऋषिभि: वेदोऽयं केवलं दर्शनश्रवणादिभि: स्वतपश्चर्यादिभिश्च प्राप्त:, यथा उक्तम्– **''ऋषयो मन्त्रदृष्टार:''**। वैदिकमन्त्रेषु ऋषीणां, छन्दसामुल्लेखो दरीदृश्यते। अनेन निश्चीयते यत् वैदिककार्यभि: मन्त्रा: दर्शनश्रवणादिभि: एव प्राप्ता आसन्, अत: वेदा: अपौरुषेया: इति। न कस्यचित् लौकिककाव्यमिव वेदानां रचना जाता। न ह्यस्या कर्ता कश्चित् बृहदारण्यकोपनिषदि लिखितं यत्–

**अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो, यजुर्वेद:, सामवेदोऽथर्वाङ्गिरस:''**।[1]

परमब्रह्मण: निश्वासात् ''ऋग्वेदादय:'' प्रादुर्भूता:। उक्तञ्च श्वेताश्वेतरोपनिषदि यत्– ''सर्वप्रथमं वेदस्य ज्ञानं ब्रह्मा प्राप्तवान्– **''यो ब्रह्माणं विदधाति पूर्व, यो वै वेदांश्च प्रहिणोति तस्मै''**।[2]

यद्यपि प्राय: उपनिषत्सु, स्मृतिग्रन्थेषु, अन्यान्यशास्त्रेषु वेदानां अपौरूषेयत्वं स्पष्टरूपेण वर्णितं वर्तते। तथापि न्यायशास्त्राचार्यै: अन्यान्यविद्वद्भिश्च न वेदस्य अपौरूषेयता स्वीकृता: नैयायिकैस्तु वेदनाम् ईश्वरकर्तृत्वं स्वीकृतम्।

तेषां मतानुसारेण वेदानां कर्तार: ऋषय: एव वर्तन्ते, अत: वेदा: अपि अन्यान्य शास्त्रमिव अनित्या एव। चार्वाकबौद्धजैनदर्शनानुयायिभिस्तु वेदानामेव प्रामाण्यं न स्वीकृतम्। अत: एते दार्शनिका: न वेदस्य अपौरूषेयता, नित्यता च स्वीकुर्वन्ति। परं मीमांसकैस्तु वेदानां नित्यत्वं अपौरूषेयत्वञ्च साधितम्।

**वेदानां प्रामाण्यम् कथम्** – मीमांसादर्शनानुसारं वेदा एव प्रमाणत्वेनाङ्गीक्रियन्ते। वेद: नि:श्रेयसेन संयुनक्ति, अनेन प्रतिपाद्यते यत् तन् न असत्यम्। पुरुषबुद्ध्या यद् निश्चीयते तद् न प्रमाणत्वेन स्वीकर्तुं शक्यते। यतो हि पुरुषबुद्धौ संशय:, भ्रम:, अज्ञानं, अशुद्धिरित्यादय: दोषा आगन्तुं शक्नुवन्ति। अत: धर्मविषये कश्चिदपि पुरुष: मीमांसादर्शने न स्वीक्रियते। यथा उक्तं पतञ्जलिना योगशास्त्रे– **''क्लेशककर्मविपाकाशयैरपरामृष्ट पुरुषविशो ईश्वर''**। अनेन बोध्यते यत्– साधारण मानवास्तु क्लशादिभि: बद्धा: भवन्ति, तत्कारणवशादेव ते न तादृशीं अकल्पनीयरचनां कर्तुं क्षमा:।

पुनः ये नैयायिकाः वेदानाम् ईश्वरकर्तृत्वं स्वीकुर्वन्ति तदा तेषां कारणात्वं, कार्यत्वञ्च वर्तते। ''जन्यत्वं कार्यत्वम्'' इति नियमात्। यस्य कार्यत्वं सिद्धम्, तथा अनित्यत्वमपि। यतो हि यः जन्यः भवति, स विनश्यति अपि। अतः वेदानां नित्यत्वसिद्धये मीमांसकैः स्वस्वग्रन्थेषु वेदानां अपौरुषेयत्वं साधितम्। सर्वप्रथमं मीमांसासूत्रकारेण महर्षिजैमिनिना प्रथमाध्यास्याष्टमेऽधकरणे वेदानां अपौरूषेयत्वं कथितम्।

**आचार्यजैमिनिना प्रतिपादिता वेदानामपौरुषेयता** - आचार्येण जैमिनिना षट्सु सूत्रेषु अपौरुषेत्वं साधितम्, केषुचित् सूत्रेषु पूर्वपक्षिणां मतं प्रस्तुतं तदनन्तरं तस्य खण्डनं कृत्वा वेदस्यापौरुषेयता साधिता। तदा अस्माकमाचार्याणां शैली सर्वदा श्लाघनीया एव यत् ते संक्षेपेणैव सूत्राणां माध्यमेन सर्वदा स्वमतं स्थापयन्ति। इदानीं ''वेदापौरुषेया'' इति पूर्वपक्षं प्रस्तूयते।

**सूत्रम् - ''वेदांश्चैके सन्निकर्षः पुरुषाख्याः''।**[3]

**सूत्रार्थः**- केऽपि वेदाः पौरुषेयाः इति मन्यते, यतो हि वेदाः पुरुषनामभिरभिहिता दृश्यन्ते। तदा ते वदन्ति यत्- **''चोदनालक्षणोर्थो धर्मः''**।[4] इति चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः, तया यो लक्ष्यते सोऽर्थः पुरूषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। सयतो हि पुरुषकृतः शब्दस्यार्थेन सह सम्बन्धो नास्ति, पूर्वपक्षी तु मन्यते यत् चोदना तु पुरुषनिर्मिता एव वर्तते, तथा इदानीन्ततकाल एव विधिवाक्यानामेव समूहा वेदा रचिता वर्तन्ते, यदा वेदा एव पौरुषेयाः तदा तदवयवरूपविधिवाक्यानि निश्चितरूपेण पुरुषनिर्मितान्येव भविष्यन्ति, यदा विधिवाक्यानि अनित्यानि तदा तैः वाक्यैः धर्मसदृशपदार्थं वयं कथं लक्षयितुं शक्नुमः।

वेदाः पुरुषनिर्मिताः कथम्, तदा पूर्वपक्षी ब्रवीति यत् वेदा पुरुषनामभिः समाख्यन्ते। यथा- **काठकम् (कठेन निर्मितम्), कालापकम् (कलापकेन निर्मितम्), पैप्लादकम् (पैप्पलादेन निर्मितम्), काण्वम् (कण्वेन निर्मितम्) इति** तदा आचार्यकुमारिलभट्टेन अपि कथितं श्लोकवार्तिके-

**''वचनान्तरसाधर्म्यात् कर्तुः सामान्यसम्प्लवे। समाख्यया विशेषोऽयं कठादिरवधार्यते''।।**

यथा- उक्तं शास्त्रदीपिकायाम्- **वेदानां पौरुषेयत्वं वाक्यत्वाद् भारतादिवत्।**

**काठकादिसमाख्याऽपि कृतकत्वे समर्थ्यते।**[5]

वेदवाक्येभ्यःभिन्नभारतादिवाक्येषु कर्तृत्वस्य दर्शनं भवति, तथैव ''कठ'' नामकविशेष- कर्तृजन्यत्वाक्षेपात्, 'कठेन रचित काठकम्' अस्याः समाख्यायाः बलनायुक्तो नास्ति, यदि वेदाः पुरुषनिर्मिता नाभविष्यत् नहि एतानि नामान्यपि नाभविष्यन्। शबरस्वमिनस्य सूत्रस्य भाष्ये लिखितम्- **''न हि सम्बन्धादृते समाख्यानम्''**।

यत् सम्बन्धं विना एतानि नामानि न दातुं शक्यन्ते, अतः शब्दरूपवेदस्य कर्ता पुरुषोऽस्ति, पूर्वपक्षी वदति यत्- यदि सिद्धान्तवादी वदेत् यदेते तु वेदस्य प्रवचनकर्तारः, न तु वेदस्य रचयितारः, तदा वयणं कथयामः यदेकस्याः संहिताया एक एव कर्ता भवति, प्रवचनकर्तारस्तु बहवो भवन्ति। यतो हि विशेषणं त्वसाध ारणमेव भवति। अनेन ज्ञायते यत् कर्तुः स्मरणाभावेऽपि विधिवाक्यानां कर्ता कश्चिदस्त्येव, तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्मः।

**सूत्रम्- ''अनित्यदर्शनाच्च''।**

**सूत्रार्थः**- वेदष्वनित्यपदार्थानामुल्लेखं दृष्ट्वा वेदाः पौरुषेयाः इत पूर्वपक्षी आह यत् वेदेषु एतादृशः पदार्थाः श्रूयन्ते ये जननमरणवन्तश्च सन्ति। कुमारिलभट्टेनोक्तम्-

**अनपेक्षत्वसूत्रे या रूपात् कृतकतोदिता।**

**वेदे सा दृश्यते स्पष्टाः कृतकार्थाभिधायिनी।।**[6]

वेदस्य पौरुषेयत्वस्य द्वितीया युक्तिः- ''अनपेक्षत्वात्''[7] सूत्रेणानेन पटादिद्रव्याणीव शब्देषु कृतकत्वस्य य अक्षेपो कृतो आसीत्, तेनैव वेदानां कर्तृत्वं सिद्ध्यति। बबरः प्रावाहणिरकामयत। प्रवाहणपुत्रेण एतादृशी इच्छा कृता। पुनः कुसुमबिन्दः औद्दलकिरकामयत इति अत्र उद्दालकपुत्रेण इच्छा कृता। अतः एतादृशेभ्यः वाक्येभ्यः सिद्ध्यते यत् एतेषां पूर्वं एतादृशी रचना वेदनाम नासीत्। अतः वेदानां पौरुषेयत्वमिति।

**इदानीमाचार्यजैमिनिना सिद्धान्तपक्ष उपस्थापयते- सूत्रम्- ''उक्तं हि शब्दपूर्वत्वम्''।**[8]

**सूत्रार्थः**- शब्दपूर्वत्वं तु अध्येतृणां। तु शब्दस्तु पूर्वपक्षिणां निराकरणार्थम्। अत्र शब्दाज्जन्याध्ययनं विवक्षितमस्ति। अतः सूत्रार्थो भवति, यत् सर्वेषामध्ययनमध्ययनान्तरपूर्वकं भवत्यस्य विवेचनं 'पञ्चमसूत्रे' कथितमेव- **औतपत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धेः तत्प्रमाणं वादरायणस्यापेक्षात्वात्।**[9] शब्दानां स्वरूपतो नित्यत्वे कृतकत्वे वा तेषामादिः प्रथमः कालो न विद्यते।

शब्दानां कृतकत्वपक्षे सा चैषा नित्यता प्राणिनामिव व्यवस्थानित्यता उच्यत इति। यथा उक्तं भर्तृहरिणा-**नित्या शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः। सूत्राणा सानुतन्त्राणां भाष्याञ्च प्रणेतृभिः।।**[10]

**नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते। प्राणिनामिव सा चैषा व्यवस्था नित्यतोच्यते।।**[11]

वेदस्याध्येतृणां वेदाध्ययनस्य अवच्छिन्ना परम्परा वर्तते। प्रत्येकस्याध्येतुरध्ययनस्य पूर्वमन्याध्ये- तुरध्ययन- मासीदनया रीत्या शब्दाध्ययनस्यावच्छिन्नपरम्परा वर्तते, वेदस्य प्रथमो स्वतन्त्रध्येता कश्चिदपि नास्ति, यस्मै वेदस्य कर्ता इति वक्तुं शक्नुमः अधुना प्राचीनतमस्य वेदस्य ज्ञानमस्माकं पार्श्वे वर्तते, परं वेदस्य कर्ता कः? इति न ज्ञायते, अतः कर्तृस्मरणाभावे वेदा अपौरुषेया इति अस्माभिस्स्वीकरणयम्। शास्त्रदीपिकाकारेणोक्तम्- **उक्तं तु शब्दपूर्वत्वमाख्याप्रवचनादिति।**

**वाक्यत्वात्पौरुषेयत्वं दृश्याऽदर्शनबाधितम्। प्रतिहेतुविरुद्धश्च हेतुस्तस्मादकृत्रिमाः।।**[12]

यदि वेदानां कर्ता कश्चिद्भविष्यत् ततोऽवश्यमध्येतृपरमम्परया बुद्धादिवदस्मारिष्यत्। नहि अस्य विस्मरणं सम्भवति। तत्प्रत्यनेन हि तदा सर्व पुंसां वेदार्थानुष्ठानं प्रमाणान्तरागोचरत्वात् फलसाधनत्वस्य। अतोऽर्वाचीनैः कथमसौ विस्मर्येत, यतः स कर्ता अवश्यं स्मर्तव्यम्, न च स्मर्यते। तेन स्मृतिरूपदर्शनयोग्यत्वे सत्यप्यदृश्यमानः कर्ता शशविषाणवदभावनात्मनाऽध्यवसीयते। इति। पार्थसारथिना उक्तं यत् ये नैयायिकादयः अपौरुषेयं मन्वानः वेदमनित्यं कथयन्ति तेऽपि कर्तृविशेषस्मरणं परम्परया न कथयन्ति स्मरन्ति वा। ते तु सामान्यतोदृष्टानुमानप्रमाणबलादेव कर्तुः स्मरणं कुर्वन्ति।

तेनोक्तम्- **''येऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम्, सामन्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिपन्ति केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अन्ये प्रजापतिम् न चाऽयं नानाविधो विवादः परम्परया कर्तरि मन्वादिवत् स्मर्यमाणे कथंचिदप्यवकल्प्यते''।**

**सूत्रम्- ''आख्या प्रवचनात्''**[13]

**सूत्रार्थ**- पूर्वपक्षिणोक्तमासीत् यत् काठापकम्, कालापकम् इत्यादिसमाख्यानामाधारेण वेदाः कठादिकर्तरा इति मन्तव्यम्, अस्यानेन सूत्रेण परिहारि विधीयते, आचार्यकुमारलिभट्टेन श्लोकवार्तिके कथितम्

यत्–''**स्मृतिप्रयोजनाभावात् कर्तृमात्रेऽनपेक्षिते। सामान्यसिद्धयपेक्षत्वान्न समाख्या नियामिका**''॥[14]

वेदानां कर्तुस्मरणं वैदिकवाक्यै: न क्रियते, यतो हि कर्तु: स्मरणस्य नास्ति किमपि प्रयोजनम्, अत वेदेषु कर्तृत्वस्य सिद्धिर्न भवितुमर्हति, तन्मूलक ''समाख्या'' इत्यनेन ''कठप्रभृतिभि:'' कर्तृत्वशेषजन्यत्वात् सम्पूर्णवेदेषु पौरषेयत्वस्य सिद्धिर्न भवितुं शक्नोति, उक्तञ्चार्येण–

''**अन्यथाप्युपपन्नत्वादियं प्रवचनादिना। न शक्ता कर्तृमूलाय प्रोक्ते च स्मरणं स्थितम्**॥''15

काठकादिसमख्याभि: नियमोऽयं न कर्तु शक्यते यत् ''काठकादिशाखा'' 'कठ'नामकपुरुषविशेषेण निर्मिता: सन्ति, यतो हि पूर्वस्थितवेदानां कठप्रभृतिपुरुषै: विशेषाध्ययनं कृत्वा केवलं वेदा: समृता न तु रचिता:, कठादिनामकरणं तु तेषां वेदप्रवचनकारणात्, अत: वेदानां पौरुषेयत्वं न सिद्ध्यति, अत: उक्तं कुमारिलेन–**श्रुत्यादेर्दुर्बला चासौ न शक्ता क् बाधितुम्। अङ्गभूयांसमेकेयं शब्दराशिं न बाधते**॥[16]

इयं ''समाख्या'' प्रमाणं श्रुतिलिङ्गादिप्रमाणेभ्य: दुर्बलास्ति अत: वेदानामेकाशं स्थिततत्वात् समाख्या श्रुत्यादिप्रमाणानि बाधितुं न शक्यते, यतोहि श्रुत्याद्यधिकदेशस्थिततत्वात्। अत: ''काठकादिशब्दा: अश्वकर्णादिशब्दा: इव ''तासु तासु वेदशाखास्वेव रूढय: सन्ति, अत: काठकादिशब्दैरभिधावृत्या एव बोधो भविष्यति, न तु पुरुषनिर्मितकारणात्। अत: काठकादिशब्दै: श्रुतिसामान्यबोधं हठात् निवारयितुं न शक्यते–

**कामं वा निर्निमितेयं शाखामेकां वदिष्यति। श्रुतिसामान्यमात्रं हि नात्र दण्डेन वार्यते**''॥

कठादय: शाखा: कठनाम्ना प्रसिद्धापि तस्या: शाखाया: प्रयोग: अन्येषां कृते निषेधयोग्या: न इति। यतो हि प्रयोगतृत्त्वधर्मस्तु न व्यासज्यवृत्तिधर्म: (अनेकपर्याप्त:) अपितु प्रत्येकपर्याप्तधर्म:। यथा डित्थडवित्थादीनां पुरुषाणां एकैव माता 'डत्थमाता' इति नाम्ना प्रसिद्धा भवति, तथैव कट्असहितानेकपुरुषोक्त शाखापि कठसम्बन्ध त्वेन काठकनाम्ना प्रसिद्धा जाता।

**अव्यासङ्गि च सर्वेषु प्रवक्तृत्त्वं कठादिषु। तेनैकव्यपदेश्यत्वं लक्ष्यते डित्थमातृवत्**॥

अत: प्रसिद्धिकारणात् एता: शाखा: कठनिर्मिता इति कथयितुं न शक्यते। तथा अनेन सम्पूर्णावेदे अनित्यताया: शङ्का न करणीया:। पुन: उक्तं यदि एतत्प्रश्नो भवेत् यत् तस्या: शाखाया: कति अध्येतार: आसन्? इति।

तदा सर्वेषां प्रवक्तृणां शाखया सह नामोल्लेख: आवश्यक: परं जिज्ञासा तु इयं वर्तते यत् तस्या: शाखाया: प्रसिद्धि: कस्य प्रवक्तु: कारणात् सञ्जाता:। तस्य निराकरणन्तु एकस्य प्रवक्तु: नाम्ना एव भवति। अत: तस्या: जिज्ञासाया: काठकादिशब्दा: पुरुषविशेषसमुदायं बोधयन्ति। तज्जातीयपुरुषै: सेवनकारणात् काठकादिनामकरणं सञ्जातम्। पूर्वपक्ष्यब्रवीत् यत् काठकादिसञ्ज्ञा: वेदस्य कर्तृन् सूचयन्ति, तस्योत्तरं दीयतेऽस्माभिर्यत् कदाचित् कर्तारं विनापि कृतेर्नामकरणं प्रवचनाध्यापनादीनां कारणादपि प्रसिद्धं भवति, तात्पर्यमिदमेवास्ति यत् केवलं मूलग्रन्थकार एव असाधारणो न भवति अपितु ग्रन्थव्याख्याकारोऽपि अनन्यसाधारणो भवितुमर्हति। अस्मात् कारणादेव वेदशाखाभि: सह काठकादिसंयोजितानि विशेषणानि सम्प्रयोजनानि सन्ति। वेदाध्यायिन: स्मर्यन्ते यत् वैशम्पायनो महर्षि: यजुर्वेदस्य सर्वा: शाखा: अधीतवान् आसीत्। कठमहर्षिस्तु पुनरिमां केवलां शाखामध्यापयाम्बभूवेति। स बहुशाखाध्यायिनां सन्धिावेकशाखाध्याय्यन्यां शाखामनधीयानस्तस्यां प्रकृष्टत्वादसाध ारणमुपपद्यते विशेषणम्।

**सूत्रः – कृते वा विनियोग: स्यात् कर्मण सम्बन्धात्।**

**सूत्रार्थः**– ''वनस्पत्यः सत्रमासत'' ''सर्पा'' रात्रमासत'' ''गावो वा एतत् सत्रमासत'' इत्यादीनि वाक्यान्मुन्मत्तबालसदृशानि कथं वेदस्य अप्रामाण्यं न कथयिष्यन्ति? पूर्वपहितां निराकरणार्थं सूत्रमिदं स्थापितम्, यत्र-यत्र वैदिकवाक्यैः सह विरोधः प्रतीयते तेषां सर्वेषां वैध्दकवाक्यानां केनचित्तु कर्मण तु सम्बन्धो वर्तत एव, पूर्वपहितभिः आहितयते यत्– वेदेषु एतादृशानि वाक्यानि दृष्टानि यथा ''वन्सपतयः सत्रमासत'' ''सर्पाः सत्रमासत'' एतानि वाक्यानि तथैवासम्बद्धानि सन्ति यथा–

**जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मत्तकानि।**

**तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः॥'**[18]

वृद्धवृषभो गीतं गायति, वृषभः गीतं गातुं कथं शक्नोति? पुनश्च पादपाः, सर्पाश्च कथं सत्र उपवेष्टुमर्हन्ति। अतः वैदिकवाक्यानि असम्बद्धानि सन्ति। तदा उक्तम्–

''वेदेषु नियमतः वाक्यानि सम्बद्धार्थ एव प्रयुक्तानि भवन्ति यथा– ''ज्योतिष्टोमः'' कथ्यते, तदाङ्काहूतयाः पूर्त्यर्थ क्रिया योज्यते ''कर्तव्या'' इति, पुनः प्रश्न उदेति यत– 'केन साधनेन यज्ञो भवेत्' उत्तरं प्राप्यते यत्– ''सोमनामकेन द्रव्येण' यज्ञो भवेत्, यदा यज्ञस्योद्देश्यं कि इति जिज्ञासोत्पद्यते तदोत्तरं प्राप्यते यत्– ''स्वर्गप्राप्त्यर्थम्'' इति, कथं भावयेत् तदा ''इत्थमनयेति'' कर्तव्यतयानुष्ठानं सम्पद्यते, एवं भावनाया अशांत् अवगन्तारः। अतः निरर्थकाः न इति।

तदा वेदेषु यानि वाक्यानि असम्बद्धानि प्रतीयन्ते न ते असम्बद्धानि प्रथमं तु एकवाक्यस्य असंगतार्थात् न स्वर्ग कामयमानः पुरुषः अग्निहोत्रं कुर्यात् इत्यादयः सर्वाणि वाक्यानि न असंगतानि। पुनः ''वनस्पतयः सत्रमासत'' ''सर्पाः सत्रमासत'' इत्यादीनि वाक्यानि अपि न असंगतानि, काराानि एताः विधयः न साहूतात् क्रियाप्रवर्तकानि अपितु सत्रस्य स्तुतिः (अर्थवादः) वर्तन्ते।

यदा अचेतनपदार्थानि अपि अनुष्ठानं कुर्वन्ति, तदा कथं विदुषं न कुर्यात्। यथा– लोके नियमो वर्तते यत्– सन्ध्याकाले पशयः अपि न चरन्ति तदा कथं विदुषः इति। अर्थात् कैमुतिकन्यायेन दण्डापूषन्यायेन च सत्रस्य स्तुतिः वर्तते।

**माधवाचार्यमते वेदापौरुषेयत्वम्** – सर्वदर्शनकारमाधवाचार्यमते पौरुषेयवादिनः निम्नानि प्रमाणानि दत्तम्– वेदस्य वाक्यानि पौरुषेयानि एव यतो हि वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् कालिदासादिवाक्यात्। वेदवाक्यान्याप्तप्रणीतानि, प्रमाणत्वे सति वाक्यत्वात्मत्वादिवाक्यवदिति। पूर्वपह्तिां मतं वर्तते यत् यथा महाभारतादीनां ग्रन्थानां रचनाकारं स्मर्यते। तथैव वेदानामपि कर्तृत्वं बोध्यते।

पुनः पूर्वपह्तिां नैय्याकिानां मतं कथयति यत्– शब्दः अनित्य वर्तते, यतो हि शब्दस्य तु बाह्येन्द्रियैः ग्रहणं क्रियते। यदा वेदाः अपौरुषेयाः तदा शब्दः अपि नित्यः भवेत् तथा एतद् नास्ति। एवं नैयायिकाः शब्दान् अनित्यो मत्वा वेदाः अपि अनित्याः इति कथयन्ति। तदा पुनः ये कथयन्ति यत् ईश्वरस्तु शरीराहित्यो वर्तते तदा कथं वेदानामुच्चारणं जातम्। तदा उक्तमीश्वरेण जनान् प्रति कृपावशाद् वेदरचना कृता। उत्तरपहहंत वर्तते– यत् भवद्धिः कथ्यते यत्– वेदाः उच्चार्यते अतः भवन्तः कथ्यन्ति यत् वेदाः ईश्वरकृताः पूर्वपह्तिां यत् मतं वतते यत् कठोन यानि मन्त्राणि कथितानि ते कठनाम्ना, तथैव चित्तिरिणा यत् उक्तं तत् तैत्तिरीयमित। परमेतत् नास्ति, यतो हि यथा पाणिनिना सूत्रमुक्तम्–'तेन प्रोक्तम्' अतः येन ऋषिणां तेषां संहितानां पठनं कृतमतः तत्राम्ना एव प्रसिद्धा जाता इति।

उत्तरपद्धितां मतं वद्नते यत् किं नाम पौरुषेयत्वम्? यत् अस्माभिः प्रतिदिनं वेदाः उच्चार्यन्ते तत् पौरुषेयत्व किम्? अथवा अस्माभिः यानि प्रबन्धानि रचयन्ते तेषामिव इति।

शास्त्रदीपिकायां पार्थसारथिमिश्रेण सर्वदर्शनसङ्ग्रहे माधवाचार्येण च वेदापौरुषेयत्वविमर्शः क्रियतेः तत्र वेदापौरुषेयत्वकारणानि–

1. वेदाध्ययनस्य अविच्छन्नपरम्परा विद्यते, प्राचीनतमस्याध्येतुः नाम ज्ञायते, किन्तु वेदानां कर्त्तुः नाम न ज्ञायते। यथोक्तं कुमारिलभट्टेन– ''वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। वेदाध्ययन– सामान्यादधुनाध्ययनं यथा।।[19]

2. यदि वेदानां कर्त्ता कश्चिदभविष्यत् ततोऽवश्यम् अध्येतृपरम्परया बुद्ध्यादिवदस्मरिष्यत्। न हि अस्य स्मरणं सम्भवति। तस्माश्रित्योऽपौरुषेय वेदः।

3. वेदकर्त्ता ईश्वरोऽस्ति, इदमपि न स्वीकरोति। यतोहि ईश्वरस्यास्तित्वमपि नस्तीति स्वीकरोति।

4. काठकादिवेदसंहितानां नामानि वेदस्य प्रवचनाद् अभिहितानि, न तु रचनत्वात्। यतोहि वेदानां न कोऽपि वर्तते। यथोक्तम्– ''यद्वा नामं पुरुषविशेषवचनः कठशब्दः, किन्तु नित्यस्य चरणविशेषस्यैवेयं संज्ञा, तच्चरणैः पुरुषैः परम्परयाधी– यमाना शाखा, काठकशब्देनाभिधीयते''।[20]

5. वेदेषु पुरुषाणामितिहासो न वर्तत अतोऽपौरुषेयः वेदः।

**निष्कर्ष** :– आचार्यजैमिनिना सूत्राणां माध्यमेन पूर्वपक्षिणां शङ्का उपस्थापिता पुनः सूत्रमाध्यमेन एव तेषां निराकरणं कृतम्। पूर्वपक्षिणां ''वेदाः पौरुषेया'' इति मतस्य खण्डनं कृत्वा पुनः ''वेदा अपौरुषेयाः'' इति विविधाभिः युक्तिभिः प्रमाणपुरस्सरं स्वमतस्थापनं कृतम् अतः सिद्ध्यति यत्– ''मीमांसादर्शन 'वेदातिरिक्तं कश्चिदपि पुरुषं प्रमाणत्वेन न स्वीकृतम्'। उक्तञ्च शाबरभाष्ये–

''चोदना तु भूत भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवमयितुं नान्यत्किञ्च, नेनिद्रयम्। न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति। तस्मादवितथः। यत्तु लौकिकवचनं, तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वाऽवितथमेव तत्। अथाप्रत्ययितादनिन्द्रियविषयं वा तावत्पुरुषबुद्धिप्रभवमप्रमाणम्। अशक्यं हि उत्पुरुषेण ज्ञातुमृते वचनात्''।

यतो हि सामान्यमानवास्तु भ्रमसंशयमिथ्याज्ञानाशुद्धिक्लेशकर्मविपाकविपर्ययविकल्पाविद्या–ज्ञानादिभिः युक्ताः भवन्ति, तदा तत्र दोषशङ्का तु भवति एव, स तु एकालिकज्ञानवान् एव भवति न सः भूतभविष्यत्ज्ञाता भवति परं ''चोदना तु भूत भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्च, नेन्द्रियम्''। अतः वैदिकवाक्यं कदापिविपर्ययत्वं न गच्छति।

**सन्दर्भ** –

1. बृहदारण्यकोपनिषदि– 2/4/10
2. श्वेताश्वेतरोपनिषदि– 9/18
3.मीमांसादर्श–27
4. मीमांसादर्शन–तर्कपादे/2
5. शास्त्रदीपिकायाम– पृ. 715
6. श्लोकवार्तिक–8/2
7. मीमांसासूत्रे–1/1/21
8. मीमाशादर्शन–29
9. मीमांसादर्शन–तर्कपादे–5
10. वाक्यपदेयी–1/23
11. वाक्यपदीये–1/28
12. शास्त्रदीपिकायाम् पृ.–719
13. मीमांसादर्शने– तर्कपादे–30
14. वेदनित्यताधिकरणे–3
15. वेदनित्यताधिकरणे–4
16. वेदनित्ताधिकरणे–5
17. शाबरभाष्ये पृ.–89

18. श्लोकवार्तिकम्, 7/366 19. शास्त्रदीपिका, वेदापौरुषेयताधिकरणम्, पृ. 723

## सन्दर्भग्रन्थसूची

1. जैमिनि, मीमांसादर्शनम्, शाबरभाष्यसहितम्, व्याख्या- उमा शंकर शर्मा ऋषिः, प्रकाशनम्-चौखम्बा सुरभारती प्रकाशनम्, वाराण्सी, संस्करण-2009

2. पार्थसारविमिश्रः, शास्त्रदीपिका, भाष्यकारः- गजाननशास्त्रिमुसलगाँवकर, प्रकाशनम्- चौखम्बा सुरभारती प्रकाशनम्, वाराणसी संस्करण-2008

3. माधवचाचार्य, सर्वदर्शनसंग्रहः, व्याख्या- उमा शंकर शर्मा ऋषिः, प्रकाशनम्-चौखम्बा सुरभारती प्रकाशनम्, वाराणसी, संस्करण-2009

4. वागुल्लासः, विशिष्टसंस्कृताध्ययनकेन्द्रम्, प्रकाशनम्- विद्यानिधि प्रकाशनम्, देहली, संश्रकण-2014

5. वाक्यपदीयम् (हरिवृषभकृतया स्वोपज्ञवृत्या, पद्मश्रीपण्डितरघुनाथशर्मणा विरचितया अम्बाकत्रीव्याख्यया च सहितम्) आचार्यभर्तृहरिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणी, 2009

6. कुमारिलप्रणीतं श्लोवार्तिकम्, पार्थसारथिमिश्रेण कृतया न्यायरत्नाकराख्यया टीकया सह, सम्पा. एम. एम. गंगानाथ झा, चौखम्बासंस्कृतप्रतिष्ठानम्, दिल्ली, 2009 ई.

7. भाष्यकरः- मुसलकगांवकर, डॉ. गजानन्दशस्त्री, शास्त्रदपिका (पार्थसारथिमिश्रेणविरचिता) (तर्कपादः), चौखम्बा सुरीारती प्रकाशनम्, वाराणसी, 2008 ई.।

शोधच्छात्र- साहित्यविभागः

रा.सं.सं., लखनऊपरिसरः

# निघण्ट्वानुसारेण ऋग्वेदे वाचः नामानि स्वरूपञ्च

- रमेशचन्द्रनैलवालः

समस्तलोकव्यवहारस्य साधकं वाक्तत्त्वमेवास्ति इत्यत्रनाऽस्ति कश्चन संदेहः विवादश्च। संस्कृतवाङ्मये निहितं तदीयं स्वरूपं कीदृशमस्ति? एतद्विषये सर्वप्रथमं वेदेषु तस्य स्वरूपवर्णितं वर्तते।

**उतत्वः पश्यन्नददर्शवाचम्, उतत्वः शृण्वन्नशृणोत्येनाम्।**
**उतोत्वस्मैतन्वं विसस्रे, जायेवपत्ये उशती सुवासाः॥**[1]

वाच एव विवर्तभूताःपृथ्वी-समुद्र-पर्वतादयो वाक्तत्त्वेस्थिताः सन्ति। तान्पश्यन्नपि मनुष्यो न पश्यति, किन्तु इयं पृथिवी, अयं पर्वतः, अयं समुद्रः इत्यादिषुभ्रमात्मकेषुज्ञानेषु सनिबद्धो भवति, इदं जगत्वाक्तत्त्वमेवेति न सः जानाति। अत एव एतत्सर्वं अपश्यन्निव भवति। समस्तानि वस्तुभूतानि शब्दस्यैव विवर्तभूतानि। नहिकोऽपिजनः तं शब्दत्वेन पश्यति। अनेनप्रकारेणार्थं ज्ञात्वाऽपि वाचं शृण्वन्नपि च न शृणोति। तत्र कारणं यत्व्यवहारोपयोगि ध्वन्यात्मकवर्णरूपेषुवाक्तत्त्वमेवास्ति इति न जानाति। अतएव एतत्श्रवणमश्रुतमिव भवति। यथा पृथिवीपर्वतादिरूपेषुविवर्तमानं वाक्तत्त्वमज्ञात्वा न पश्यति, तथैवाभिव्यञ्जक ध्वन्यात्मकवर्णरूपेषु शृणवन्नपि वाक्तत्त्वमज्ञात्वाफलतो न शृणोति। यस्यशब्दशास्त्रपरिज्ञानात्सत्संस्कारः उत्पद्यते, तस्मै वर्णादिज्ञानयुक्तं भ्रमं निवार्यवाग्देवी स्वीयं वास्तविकं स्वरूपं दर्शयति। निघण्टौ वाचः सप्तपञ्चाशत्पर्यायाः कथिताः। एतेषां शब्दानां प्रयोगः ऋग्वेदे विविधार्थेषु वर्तते । अत्र तेषां शब्दानां मन्त्रपूर्वकमर्थः स्पष्टीकृतः। निघण्टौ वाचः नामानि यथा -१. श्लोक, २. धारा, ३. इला, ४. गौ, ५. गान्धर्वी, ६. गौरी, ७. गभीरा, ८. गम्भीरा, ९. मन्द्रा, १०. मन्द्राजनी, ११. वाशी, १२. वाणी, १३. वाणीची, १४. वाणः, १५. पविः, १६. भारती, १७. धमनिः, १८. नालीः, १९. मेलि, २०. मेना, २१. सूर्या, २२. सरस्वती, २३. निवित्, २४. स्वाहा, २५. वाग्निः, २६. उपब्दिः, २७. मायुः, २८. काकुत्, २९. जिह्वा, ३०. घोषः, ३१. स्वरः, ३२. शब्दः, ३३. स्वनः, ३४. ऋक्, ३५. होत्रा, ३६. गीः, ३७. गाथा, ३८. गणः, ३९. धेनाः, ४०. ग्नाः, ४१. विपाः, ४२. नगा, ४३. कशा, ४४. धिषणा, ४५. नौः, ४६. अक्षरम्, ४७. मही, ४८. अदिति, ४९. शची, ५०. वाक्, ५१. अनुष्टुप्, ५२. धेनुः, ५३. वल्गुः, ५४. गल्दा, ५५. सरः, ५६. सुपर्णी, ५७. बेकुरा। एतेषां शब्दानां प्रयोगः ऋग्वेदे विविधमन्त्रेषु प्राप्यते, तेषां मन्त्राणामुल्लेखपूर्वकं व्याख्याऽत्र क्रियते ।

श्लोकः-सम्प्रति अपि लोके शास्त्रे च अनुष्टुप्-छन्दस श्लोक इति अपरपर्यायः वर्तते। मन्ये लौकिककाव्ये सर्वप्रथमं अनुष्टुप् छन्दस्यैव प्रयोगः अभवत्। अत एव श्लोक एव अनुष्टुप् छन्दनाम्ना प्रसिद्धो जातः। ऋग्वेदे पञ्चविंशतिवारं श्लोकशब्दस्य प्रयोगः वागर्थे वर्तते। स्त्रोत्रार्थस्य वाचके श्लोक शब्दस्य प्रयोगः यथा- इन्द्रवरूणमित्रार्यमादेवाः अस्मान्भूमिं सुखं धनञ्च दद्यात्। यज्ञवर्धनाय अदितिः अस्मान्स्वतेजसा पूरयेज!।[2] बृहत्मन्त्ररूपेण शब्दवाचकरूपेण च श्लोकशब्दस्य प्रयोगः कुर्वन्नुक्तं यत् आहुतिमिव अस्माकं स्तोत्रवचनानि अपि देवपार्श्वे गच्छेत्।[3] ध्वनिवाणीमन्त्रस्तोत्रार्थे च श्लोकशब्दस्य प्रयोगः यथा -हे अरिनाशकौ अश्विनीकुमारौ भवन्तौ अत्रागत्य सोमरसाभिषवणकाले स्तोत्रगानं शृणुताम्। प्राचीनकालीनः ऋषयः कथयन्तियत्भवन्तौजनानां दुःखनाशायैव यत्र- तत्र भ्रमतः।[4] स्तुतिरूपार्थे श्लोकशब्दस्य प्रयोगः यथा- हे याजकाः भवन्तः स्वयमेव

श्लोकरचनां कृत्वा मेघगर्जनमिवस्तुतिं कुर्वन्तु। गायत्रीछन्दसि काव्यपाठं कुर्वन्तु।[5]

**इला**– ऋग्वेदे चतुर्पञ्चाशत्वारं इलाशब्दस्य प्रयोग: वर्तते। इला अन्नदात्रीदेवी वर्तते। सरस्वतीमहीभ्यां स हइलादेव्या: नामो वर्तते। इलासरस्वतीमहीतिस्र: एव देवी सुखकरीक्षयरहिता च वर्तन्ते। तिस्र: एव देव्य कुशासने विराजमाना: विद्यन्ते।[6] श्रेष्ठादिगुणयुक्ता: तिस्ररेवदेव्य: अस्माकं यज्ञस्थलेस्थित्वातस्य संरक्षणं कुर्यात्। अग्नि: इलाया: पुत्रो इत्यपि वर्णनं प्राप्यते। धीस्तुतिरूपवागर्थे च इलाशब्दस्य प्रयोग: वर्तते।

**गौ:**– ऋग्वेदे एकोनविंशतिवारं गौ: शब्दस्य प्रयोग: वर्तते। एषु केषाञ्चित्स्थलेषु अस्य वागर्थे प्रयोग: वर्तते। यथोक्तम्– वत्स: गो: परित: शब्दरहितं अभिव्यक्तिं करोति, गाव: रम्भनद्वारा स्वचेष्टयामनुष्यान् आकर्षति। सा: उज्ज्वलदुग्धं उत्पादयित्वा स्वभावन्प्रकटीकरोति।[9] माध्यमिका वागर्थे गौशब्दस्य प्रयोग: यथा– गौ(वाणी) निश्चितमेव शब्दकुर्वाण: जलानि (रसान्) कम्पयति। सा गौ (वाणी) एकद्वित्रीणिचत्वारि- पञ्चनवपदायुक्तायां छन्दसि विभाजयति। ता: एव छन्दयुक्ता: सम्पूर्णाकाशे व्याप्ता: भवति।[10] अन्यस्थले अस्या: प्रयोग: संज्ञार्थे जात:। सोमदेवस्य स्तुति: कुर्वन्नुक्तं यत् तेतान्शक्तीन् उत्पद्येत्येन अस्मान् गौ: (वाणी:) प्राप्येत्। **गान्धर्वी**– ऋग्वेदभाष्यकर्तासायणेनगान्धर्वी शब्दस्य वागर्थे पर्याये वा कथितम्। यथा– गान्धर्वी-वाङ्नाम्। ऋषि: कथयति यत् मनुष्येषुप्राय: सर्वे एव अग्निदेवस्य अर्चनां कुर्वन्ति। राजानहुषस्य प्रजाजना: अग्निदेवस्य विविधप्रकारेणार्चनां करोति स्म। अग्निदेव: यज्ञीयमार्गनिमित्तेन अस्माकं वेदवाणी: शृणोति।[12]

**गौरी**– ऋग्वेदे गौरीशब्दस्य द्विधा प्रयोगं वर्तते। तत्र द्वित्रस्थलेषु एव तस्य वागर्थे एव प्रयोग: वर्तते। सा गौरी (वाणी) जलानिआन्दोलयति। सागौ (काव्यमयीछ्न्दान्) एकद्वित्रयचत्वारिपञ्चनव पदयुक्तानि छन्दयुक्तपदानि सम्पूर्णाकाशमण्डले व्यापयति।[13] हर्षप्रदातासोम: यज्ञस्थले प्रतिष्ठितो भवति। स: नद्या: तरंगमिव वाणी: आन्दोलयति।[14]

**मन्द्रा**– ऋग्वेदे द्वादशवारं मन्द्राशब्दस्य प्रयोग: वर्तते। केषुचित् स्थलेषु गौर्य्या: विशेषणरूपेणास्या: प्रयोग: दृश्यते। उक्तं यत् हे देव: योऽपि साधक: स्वनवानन्दयुक्तवाण्या: भवत: स्तुतीं कृत्वा स्तवनं करोति, तं भवान्सनातनधर्मयुक्तपवित्रञ्च बुद्धिं ददाति।[15] अन्यत्रोक्तं यत् ह ऋत्विज: भवन्त: आनन्दयुक्तो भूत्वा स्तोत्रपाठं कुर्वन्तु। सत्कर्माणि कुर्वन्तु, अनेनैव प्रकारेण सत्कर्माणि कुर्वाण: यज्ञानुष्ठानं कुर्वन्तु।[16]

**मन्द्राजनी**– ऋग्वेदसंहितायां मन्द्रावनीशब्दस्य एकत्रैव प्रयोग: वर्तते। तत्रापि स: वागर्थस्य द्योतनं करोति। यथा– मधुरानन्दमय: सोम: इन्द्राय प्रदद्यात्। यजमानै: निष्पादित: सोमरस: शत्रोपरि आघातयुक्तबाणैरिव बारम्बारं परिष्क्रियते।[17]

**वाशी:**– ऋग्वेदे विभिन्नार्थेषु प्रयुक्त: वाशीशब्द: दशवारं प्रयुङ्तो वर्तते। केषाञ्चित् स्थलेषु अस्या प्रयोग: वागर्थे वर्तते। यथा– अग्नि: एव हव्यहुतिञ्च स्वीकृत्य कल्यानकारी यज्ञं सम्पादयति। भवान् एव देवानां आवाहनकर्ता वर्तते। देवशक्ति: अग्निदेवेन सह यज्ञेषु आगच्छति।[18] इत्यत्र सायणेन वाशी: शब्दस्य वाक्पर्याय: कृत: यथा –स्तुतिलक्षणया वाचोपेतम्।[19]

**वाणी**– सम्पूर्णे ऋग्वेदे त्रिषुस्थलेषु वाणीशब्दस्य प्रयोग: जात:। एषु द्विवारं स्तुत्यर्थे अस्या: प्रयोग: वर्तते। यथास्तुतिकर्तार: अश्विनीकुमारयो: स्तुति: कुर्वाण: कथयन्ति यत्– भवान्सूर्याया: (उषाया:) शोभायै पुष्टो भवताम्। स्वपरेषाञ्च शोभाकल्याणाय पुष्टिकारकमन्नं प्रददत:। भवत्पार्श्वे अस्माकं स्तुतय: प्राप्येत्।[20] एकत्र ऋत्विग्सम्बन्धिनी वागर्थे वाणीशब्दस्य प्रयोग: वर्तते। यत्मरूतस्य स्तुति वर्तते यत्वयं भवत: स्तुति: कुर्वाण: ऋषीणामिव भवत: अर्चनं कुर्म:।[21]

**वाणीची**– सम्पूर्णे ऋग्वेदे वाणीचीशब्दस्य एकेषु स्थलेषु एव प्रयोग: जात:। इत्यत्र वाग्सम्बन्धी

अर्थमेव प्रकाशयति। उक्तं यत् हे धनवर्षकौ अश्विनीकुमारौ वयं स्तोतारः भवतः उत्तमधनैः स्तुतिभिश्च अर्चनं करोमि। वयं स्ववाणीं भवतः रथे स्थापयामि। वयं सहजस्वभावेन भवतः स्तुवनं कुर्मः। भवन्तौ अस्मानावाहनं शृणुताम्।[22]

**धमनिः**– ऋग्वेदे धमनिः शब्दस्य एकत्र एव प्रयोगः वर्तते। आचार्यसायणेन धमनिः विषये उक्तं यत्– **शब्दं कुर्वाणं ताम् वाचे।**[23] ऋषिः कथयति यत् जलयुक्ताः प्रमदाः मेघाः आकाशे गर्जनं कुर्वाणः वर्तन्ते, तदा स्तोताराणां स्तुत्यैः वाणीरूपीस्तुत्यैः मेघाः सर्वत्र विस्तृतो जातः।[24]

**सरस्वती**– यद्यपि ऋग्वेदे एकोनचत्वारिंशत्स्थलेषु सरस्वतीशब्दस्य प्रयोगः वर्तते, तथापि एकत्रैव अस्य अवाण्यर्थे प्रयोगः दृश्यते। यथा– या सरस्वतीनदीरूपप्रभूतजलानि प्रवाहयति, धीप्रचोदयित्री सासरस्वती सर्वेषां याजकानां प्रज्ञां उत्कृष्टां करोतु।[25]

**निवित्**– निवित्शब्दस्य प्रयोगः ऋग्वेदे दशवारं जातम्। बहुषु स्थलेषु अस्य मन्त्रार्थे प्रयोगः वर्तते।[25] हेमित्रवरूण भवान् मम यज्ञे आगच्छतु होतादयः उत्तमस्तोत्रमन्त्रैः भवतः स्तुतिं कुर्वन्ति। अत अस्माकं यज्ञे सुप्रतिष्ठिताभवताम्। आचार्यसायणेन स्वभाष्ये उक्तं यत्– **निविदा वेदात्मिकया वाचा। निविदिति वाङ्नाम्।**[27]

**स्वाहा**– ऋग्वेदे स्वाहाशब्दस्य सप्तदशवारमुल्लेखः वर्तते। तथा अनेकधास्य प्रयोगः वाणेः वाचकरूपेण अभवत्। वयं पूषामरूद्गणेभ्यः संयुक्तो भूत्वा सर्वदेव्यैः गायत्रीसंरक्षककर्तेन्द्राय श्रेष्ठवाण्या हव्यं समर्पयेत्।[28]

**वग्नुः**– वग्नुः शब्दः ऋग्वेदे नवधा प्रयुक्तं वर्तते। अयं शब्दः अनेकधा वाणीवाचकरूपे प्रयुङ्तो वर्तते। शुष्कसरोवरेषु शुष्कचर्ममिवशुष्कमण्डूकपार्श्वे यदांतरिक्षजलं गच्छति, तथैव सवत्सा धेनुमिव कलकलशब्दः भवति।[29] यदा सोमरसस्य शोधनं भवति, तदापात्रे पतनसमये मधुरं शब्दं करोति।[30]

**उपब्दिः**– उपब्धिशब्दस्य ऋग्वेदे चतुर्धा प्रयोगः जातः। एकत्र उपब्दिः शब्दस्य सायणेन **"उपब्दिर्वाक्गुर्वापि समीपे गम्यते, रण्यते, उपपद्यते इति वा"**[31] अन्यत्र **"उपब्दिः वाङ्नाम्"**[32] कृतम्। ऋषिः कथयति – द्वेस्थले वागर्थे प्रयोगः वर्तते। यथा मनुष्याः अपराधिनः मृत्युदण्डं ददति तथैव इन्द्रदेवस्य साहचर्याः मरुद्गणाः युद्धकाङ्क्षिणः राक्षसान्शस्त्र प्रहारेण घ्ननन्ति। तदा तेषां भीषणं शब्दध्वनिं श्रूयते।[33]

**मायुः**– प्रायः वैदिकसाहित्ये मायुशब्दस्य प्रयोगः पशूनांवाचे वर्तते। यतोहि ऋग्वेदे विभिन्न प्रसंगेषु अस्य प्रयोगः गोऽजमण्डुकैः सह अन्विति दृश्यते। मण्डूकस्य सन्दर्भे एनं **गोमायुरेकः अजमायुरेकः** इति। कथनम् वर्तते। अर्थात् एकः मण्डूकः गौरिव, अपरः अजा इव वदति, एकः पृश्निवर्णीयः अपरो हरित्वर्णीय वर्तते। अनेनैव प्रकारेण विभिन्नाकृतियुक्ताः मण्डूकाः एकत्र निवसन्ति तथा विभिन्नाप्रकारिका ध्वनिं कुर्वन्ति। यथा शुष्कसरोवरे जलानि पतन्समये ध्वनिः आगच्छति तथैव शुष्कचर्मयुक्तमण्डूकानां पार्श्वे यदा जलानि गच्छति तदा सवत्सा धेनुमिव ते ध्वनिं कुर्वन्ति।[34]

**काकूत्**– सम्पूर्णे ऋग्वेदे काकुत्शब्दस्य एकवारमेव प्रयोगं जातम्। इत्यत्र काकुत्शब्दस्य अर्थ जिह्वा वर्तते। वाचः उत्पत्तिः जिह्वया एव भवति, अतः एषः जिह्वयाः पर्यायरूपेणैव प्रयुङ्तो वर्तते। इन्द्रः श्रेष्ठजिह्वया मधुररसतरंगान् स्वीकारोति, तेनैव सोमरसपानेन अस्माकं रक्षणं करोति।[35]

**जिह्वा**– जिह्वाशब्दस्य प्रयोगः एकविंशतिवारं वर्तते। परं एकत्रैव अस्य प्रयोगः स्तुतिरूपवागर्थे वर्तते। सोमदृष्ट्वा अस्माकं वाणी मरूद्गणानां स्तुतिः करोति। अत्र अंगरूपेणास्य प्रयोगः वर्तते। सम्भवतः वाण्या साधनभूतत्त्वेन अस्य लक्षणयां वाचः वाचकत्वेन स्वीकृतः।[36]

**घोषः**–घोषशब्दस्य सप्तवारं प्रयोगः ऋग्वेदे वर्तते। सायणेन हर्षोत्पत्तिकर्तारूपेण घोषशब्दस्य प्रयोगः कृतः– **हर्षादुत्पन्नो महाध्वनिः घोषशब्दः।** देवानां स्तुति काले अस्य प्रयोगः वागर्थे कृतं वर्तते।[37]

**स्वरः**– ऋग्वेदे स्वरशब्दस्य त्रिधाप्रयोगः वर्तते। तत्रापि द्विधा अस्य प्रयोगः वाणीवाचकार्थे जातः। आचार्यसायणेन स्वरशब्दस्य व्याख्याकृता– **अभिलक्ष्य प्रशंसारूपं शब्दं कुरु।** इन्द्रदेवः अस्माकं स्तुतीन् श्रुत्वा होतारं, उद्गातारं, आध्वर्यञ्च प्रशंसया प्रोत्साहयन्ति।[38]

**स्वनः**–स्वनशब्दस्य प्रयोगः ऋग्वेदे षड्वारं वर्तते। एतत्र सायणे न अस्यार्थः वेगजनितः शब्दः कृतः मरूद्गणानां स्तुत्यावसरे स्तोतारः कथयन्ति यत्– बलसम्पन्नतेजस्वीगमनशीलप्रभातकारी हे भगवन् मरूद्गण– भवान्शत्रून्पराजित्य स्ववशे कुर्वन्ति। हे मरूद्गण भवान्स्वयमेव अस्मान्दीप्तिरश्मियुक्तो कृत्वालंकारयतु।[39]

**ऋक्**–ऋक्शब्दस्यप्रयोगः ऋग्वेदे सप्तवारं जातम्। परं एकत्रैवास्य प्रयोगः वागर्थे वर्तते। इन्द्रदेवः यज्ञेषु आगत्य आसनं स्वीकुर्यात्। सामगानेन प्रशंसायुक्तो भूत्वा बृहस्पतिदेवः तस्य स्तुतिं कुर्यात्।[40]

**होत्रा**–होत्राशब्दः सप्तवारं ऋग्वेदे उल्लिखितो वर्तते। आचार्यसायणे नास्यार्थः कृतः– **ह्यन्तेङ्स्याम्हवीषि इति यद्वाहूयते। तत्र प्राणः इति होत्रा वाक्।** होत्रावाग्शब्दस्य प्रयोगः बहुधा वर्तते। हे इन्द्र वरूणौ अस्मान्वाञ्छितधनं ददातु, वीरतायुक्तमैश्वर्यं ददातु। स्तुत्यर्थे अस्य प्रयोगः सर्वत्र दृश्यते। ब्राह्मणग्रन्थेषु **होत्रा इति वाङ्नाम्** एतादृशः प्रयोगः प्राप्यते।

**गीः**– ऋग्वेदे गीः शब्दस्य चतुर्विंशतिवारं प्रयोगः वर्तते। स्तुतिरूपवागर्थे अस्य प्रयोगः दृश्यते, यथा– हे अग्निदेव वयं कथं भवतः स्तुतिं कुर्मः, केन हविना हविः दद्मः। अस्यापि स्तुत्यर्थे बहुधा प्रयोगः दृश्यते।[41]

**मही**–महीशब्दस्य षड्त्रिंशत्वारमृग्वेदेप्रयोगः दृश्यते। केषुचिद् स्थलेषु अस्य प्रयोगः **प्रश्चिकावागर्थे** अस्य प्रयोगः वर्तते, तथा केषुचिद्स्थलेषु पृथिवीवाचकार्थेषु अस्य प्रयोगः वर्तते। इन्द्रदेवस्य मधुरावाणी यजमानं तथैव सुखं ददाति, यथा गोधनवृक्षञ्च यजमानं सुखं ददतः।[42]

**गाथा**– गाथाशब्दस्य विविधार्थेषु चतुर्धा प्रयोगः वर्तते। सायणेनोक्तम्– **गाथा नाम परिवाङ्।**[43] वागर्थे गाथा शब्दस्य प्रयोगः अपि ऋग्वेदे प्राप्यते।[44]

**धेना**– धेनाशब्दस्य एकादशस्थलेषु प्रयोगः वर्तते। पञ्चस्थलेषु अस्य वागर्थे प्रयोगः वर्तते। आचार्यसायणेनास्य विविधार्थेषु प्रयोगः कृतः। यथा– माध्यमिका वाक्, स्तुतिरूपावाक्।[45]

**ग्ना**– ग्नाशब्दस्य अष्टादशवारं प्रयोगः दृश्यते। सर्वथा अस्य बहुवचने एव अस्य प्रयोगः वर्तते। अतः अस्यार्थः देवपत्नी वर्तते। एकत्रास्य प्रयोगः भारतीशब्देन सह वर्तते। अतः अस्यार्थः वाणीपरिचायकरूपेण कृतम्।[46]

**धिषणा**– धिषणाशब्दस्य विविधार्थेषु प्रयोगः वर्तते। स्तुत्यर्थे, बुद्ध्यर्थे, वाग्देवतार्थे, वागर्थे[47] च। आचार्येण वेंकटमाधवेन धिषणाशब्दस्य वाणी इति अर्थः कृतः।

**अनुष्टुप्**–अनुष्टुप् शब्दस्य एकधा एव प्रयोगः वर्तते। यत्र अस्य प्रयोगः वाणीवाचकार्थे वर्तते।[48]

**धेनुः**– धेनुः शब्दस्य एकविंशतिवारं प्रयोगः प्राप्यते, परं केषुचित्स्थलेषु एव अस्या प्रयोगः वाचा सह वर्तते। एतादृशेषु स्थलेषु अस्यार्थः माध्यामिका वाक् वर्तते। हे इन्द्र भवतः स्तुतिः गौरूपं धार्यते। ताः सोमयज्ञकुर्वाणं यजमानं पोषयन्तः तानेच्छितपदार्थान्ददाति।[49]

**गल्दा**– यद्यपि गल्दा शब्दस्यार्थः वाक्सम्बन्धितो नास्ति, तथापि गिराशब्देन सह प्रयुक्तत्वादस्यार्थः वाणी प्रतीयते। [50]

**वाक्**– वाक्शब्दस्य प्रयोगः ऋग्वेदे बहुधा जातः। तत्र पृथक्–पृथक्रूपेण तस्य प्रयोगः जातः। मुनिना ज्ञायते यत्– वाण्याः चत्वारः रूपा सन्ति, तत्रापि त्रीणि न प्रकटरूपा। तथा सर्वे मनुष्याः वैखरीवाणेः एवप्रयोगः

कुर्वन्ति। मानुषीवाणीरूपेण वाक्शब्दस्य प्रयोगः वर्तते।[51] माध्यमिका वागार्थे प्रयोगः यथा– अज्ञानीनः ज्ञानसम्पन्नकर्त्री, विदुषः आनन्ददायित्री वाणी यदा यज्ञेषु प्रकटीभवति, तदा चतुर्दिशः अन्नजलयोः दोहनं भवति। सा दिव्यावाणी कुतः प्रकटीजातः।[52] देवैः या वाणी उत्पादिता, तासु विविधरूपाः वाण्यः पशवः वदन्ति, अन्नबलप्रदाता तथा गौसदृशहर्षप्रदाता सा वाणी अस्माभिः स्तुतनीयम्।[53]

**निष्कर्षः** –एवं यास्काचार्येण यानि नामानि प्रदत्तानि तानि वेदाधारितानि एव। वेदेषु वाचः एव विविधपर्याये तेषां शब्दानामुल्लेखः प्राप्यते। स्तुति–मन्त्र–वाणी–बुद्धि–वाग्देवता–मन्त्रादिषु विविधेष्वर्थेषु वाचः पर्यायत्वेनैषां प्रयोगः वर्तते। बहुधा वाचः पर्यायशब्देन सह बहुशः पर्यायशब्दाः उल्लिखिताः सन्ति, येनानुमीयते यत् तेऽपि वाचः पर्यायभूता एव। तथापि केचन शब्दाः अवशिष्टाः सन्ति, येषां प्रयोगः सम्बन्धो वा ऋग्वेदे वाण्यर्थे न वर्तते। ते शब्दाः सन्ति– गभीरा, कशा, नौ, नना, विपा, सुपर्णी, बाणः, धारा, पविः, बेकुरा, सूर्या, भरती, शब्दः मेलि, मेना, गणः, शची, अक्षरं, सरश्च वर्तन्ते। ऋग्वेदे समस्तपर्यायाणां विवेचनेन ज्ञायते यत् स्फोटस्य यादृशोऽपि स्वरूपः वर्तते, सर्वेषां वाचः पर्यायत्वेन स्वीकरणं निघण्टौ आचार्यैः कृतम्। विभिन्नस्वरूपैः वाग्देव्याः स्वरूपकल्पनं तस्याः विस्तृतीकरणमेव ऋषीणां लक्ष्यमासीत्। अतः विविधपर्यायै एव परा–पश्यन्ती–मध्यमा–वैखरीणां वाचां निरूपणमभवत्।

**सन्दर्भः**–

1. ऋग्वेदः
2. अस्मे इन्द्रो वरुणो अर्यमाद्युम्नं यच्छन्तुमहिशर्मसप्रथः। अवध्रं ज्योतिरदिते ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे।। ऋ.७/८३/१०
3. युजे वा ब्रह्मपूर्व्यनमोभिर्विश्लोक एतु पथ्येवसूरेः। शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः।। ऋ.१०/१३/९
4. प्रवाद्यामना सुवृता रथेन दस्राविमं श्रृणतं श्लोकमद्रेः। किमङ्गं वा प्रत्यवर्ति गमिष्ठाहुर्विप्रासो अश्विना पुराजाः"।। ऋ.१/११८/३
5. मिमीहश्लोकमास्ये पर्जन्य एव ततनः। गाय गायत्रमुक्थ्यम्।। ऋ.१/३८/१४
6. इलासरस्वतीमहीतिस्रोदेवीर्मयोभुवः। बर्हिः सीदन्त्वस्त्रिधः। ऋ.१/१३/९
7. सरस्वतीसाधयन्तीधियं न इलादेवीभारतीविश्वपूर्तिः। तिस्रोदेवीः स्वधया बर्हिरेदमच्छिद्र पान्तु शरणं निषद्य।। ऋ.२१/३/८
8. जानन्ति वृष्णो अरूषस्य शेवमुतब्रध्नस्य शासनेरणन्ति। दिवोरूच सुरूचो रोचमाना इला येषां गण्या माहिना गौः।। ऋ.३/७/५
9. अयं सशिङ्क्तेयेन गौरभीवृता मिमातिमायुं ध्वसनावधिश्रिता। साचित्तिभिर्निहिचकारमर्त्यविद्युद्भवन्ती.....।। ऋ.१/१६४/२९
10. गौरीर्मिमाय सलिलानि तक्षत्येकपदीद्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा पर मेव्योमन।। ऋ.१/१६४/४१
11. तया पयस्व धारया यया गाव इहागमन्। जन्यास उप नो गृहम्। ऋ.९/४९/२
12. अग्निविश ईडतेमानुपीर्या अग्निं मनुषोनहुषो विजाताः। अग्निर्गान्धिर्वी पथ्यामृतस्याग्नेर्गव्यूतिर्धृत आ निषत्ता।। ऋ. १०/८०/६
13. गौरीर्मियाय सलिलानि तक्षत्येकपदीद्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।। ऋ.१/१६४/४१
14. मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित्। सोमोगौरी अधिश्रितः।। ऋ.९/९२/३
15. इन्द्रयस्ते नवीयसीं गिरं मन्द्रामजीजनत्। चिकित्विन्मनसं धियं प्रत्नामृतस्य विप्युषीम्। ऋ.८/९५/५
16. मन्द्रा कृणु ध्वं धियं आतदुध्वं धियं नावमरित्रपरणीं कृणुध्वम्। इष्कृणुध्वमायु धारं कृणुध्वं प्राञ्चं यज्ञं....।। ऋ.१०/१०१/२
17. उपोमतिः पृच्यते सिच्यते मधुमन्द्राजनी चोदते अन्तरासनि। पवमानः सन्तनिः प्रघ्नतामिव मधुमान्द्रप्सः....।। ऋ.९/६९/२
18. सहिक्षेमोहविर्यज्ञः श्रुष्टीदस्य गातुरेति। अग्निं देबा वाशीमन्तम्।।ऋ.१०/२०/६
19. सायणभाष्य १०/२०/६
20. युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहशुः सूर्यायाः। प्र वां वायोवपुषेऽनुप्तन्नक्षद्वाणी सुष्टुताधिष्ण्या वाम्।। ऋ.६/६३/६
21. एषास्या वो मरूतोऽनुभर्त्रीष्टोभति वाघतो न वाणी। अस्तो भयद्वृथासामनुस्वधागभस्त्योः।। ऋ.१/८८/८
22. सुष्टु भो वां वृषण्वसूरथेवाणीच्याहिता। उत वां ककुहो मृगः वृक्षः कृणोति वापुषो माध्वीममश्रुतं हवम्।। ऋ.५/७५/४
23. ऋ.२/११/८
24. नि पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान्। दूरेपारेवाणीं वर्धयन्त इन्द्रेषितां पप्रथन्नि।। ऋ.२/११/८

25. महो अर्ण सरस्वती प्रचेतयति केतुना। धियोविश्वविराजति।। ऋ.१/३/१२
26. जुषेथां यज्ञबोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु। अच्छा राजाना नाम एत्यावृतं प्रशास्त्रादा पिबतं सौम्यं मधु।। ऋ.२/३६/६
27. ऋ.२/३६/६ (सायणभाष्य)
28. पूषण्वते मरूत्वते विश्वदेवाय वायवे। स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तन।। ऋ.१/१४२/१२
29. दिव्या आपो अभि यदेनमायन्दृतिं न शुष्कं सरसीशयानम्। गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति।। ऋ.७/१०३/२
30. अति श्रितीतिरश्चता गव्या जिगात्यण्व्या। वग्नुमियर्ति यं विदे।। ऋ.९/१४/६
31. ऋ.१/१६९/७ (सायणभाष्य)
32. ऋ.९/८८/५
33. प्रति घोराणमेतानामयासां मरूतां शृण्व आयतामुपब्दिः। ये मर्त्य पृतनायन्तमूमैर्ऋणावानं न पतयन्त सर्गैः।।ऋ.१/१६९/७
34. गोमायुरेको अजमायुरेकोः पृश्निरेको हरित एव एषाम्। समानं नाम बिभ्रतो विरूपोः पुरूत्रा वाचं पिपिशुर्वदन्तः।। ऋ.७/१०३/२०
35. या ते काकुत्सुकृता या वरिष्ठा यथा शश्वत्पिबसि मध्व ऊर्मिम्। तया पाहि प्रते अध्वर्युरस्थत्सं तेवजो वर्ततामिन्द्र गव्युः।। ऋ.६/४१/२
36. पितु:प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वाप्रजिगाति चक्षसा। यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि....।। ऋ. १/८७/५
37. सम्पश्यामाना अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुधानाः। विरोदसी अतपद्घोष एषां जाते निष्ठायद्धुर्गोषु वीरान्।। ऋ.३/३१/१०
38. एहि स्तोयां अभिस्वराभि गृणीहवा रूवः। ब्रह्मा च नो वसो सचेन्द्र यज्ञं च वर्धयः।। ऋ.१/१०/४
39. स्वनो न वोऽमवोन्रेजयद्वृपात्वेपो ययिस्तविप एव या मरूत्। यदायुक्तत्मना स्वादधिष्णुभिर्विप्प्पर्धसो विमहसो....।। ऋ.५/८७/५
40. एन्द्रोबर्हिः सीदतु पिन्वतामिडा बृहस्पतिः सामभिरकवो अर्चतु। सुप्रकेतं जीवसे मन्स धीमहि तद्देवानामवो...।। ऋ.१०/३६/५
41. कथा दाशेमाग्नये कास्मै देवदुष्टोच्यते भागिनेः गीः। यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान्।। ऋ.१/१२०/१
42. एवाह्यस्य सूनृता विरप्शी गोमती मही। पक्वा शाखा न दाशुषे।। ऋ.९/८/८
43. ऋ.८/७१/१४
44. अग्निमीद्धिष्वावसे गाथाभिः शीरशोषिषम्। अग्निः राये पुरूमीडह श्रुतं नरोग्निं सुदीतये छर्दिः।। ऋ.८/७१/१४
45. पितुश्चिदूधर्जनुषा विवेदव्यस्य धारा असृजद्वि धेनाः। गुहा चरन्तं सखिभिः शिवेभिर्दिवोहव्वीभिर्न गुहा बभूव।। ऋ.३/१/९
46. आग्ना अग्न इहावसे होत्रा यविष्ठ भारतीय। वरूत्रीं धिषणां वह।। ऋ.१/२२/१०
47. अभि वो अर्चे पोष्यावतो नृन्वास्तोष्पतिं त्वष्टारं रराणः। धन्या सजोषा धिषणा नमोभिर्वनस्पतीरोषधी राय एषे।। ऋ.५/४१/८
49. बीभत्सूना सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्। अनुष्टुभमनु चूर्चूर्यमाभमिन्द्रं निचिक्युः कवयो मनीषा।। ऋ.१०/१२४/९
50. धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते। गामश्वं पिप्युषी दुहे।। ऋ.८/१४/३
52. गल्दाया गाल्त्नेनास्त्रावधेनगिरा स्तुत्या च युक्तः। मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा।। ऋ.८/१/२०
53. चत्वारिवाक्परिमिता पदानि तानि विदुर्ब्राह्मणाये मनीषिणः। गुहा त्रीणिनिहिता नेङ्गयन्ति तुरीयं वाचो....।। ऋ.१/१६४/४५
54. यद्वाग्बदन्त्यविचेतनानि राष्ट्री देवानां निषसादमन्द्रा। चतस्र ऊर्ज दुदुहेपयांसिक्वस्विदस्याः परमं जगाद।। ऋ.८/१००/१०
55. देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्ज दुहाना धेनुर्वागस्मानुप सुष्टुतैतु।। ऋ.८/१००/११

**सन्दर्भग्रन्थसूची-**

1. वेदालंकार, आचार्य जयदेव, वैदिक दर्शन, भारतीय विद्या प्रकाशनम्, १९९१.
2. शर्मा, डा० गणेश दत्त. ऋग्वेद में दार्शनिक तत्त्व. साहिबाबाद(उत्तरप्रदेश) : उर्मिला प्रकाशनम्, २००६.
3. ऋग्वेद संहिता, अनु. व्याख्या. और सम्पा. डा० जियालाल कम्बोज. विद्याभारती प्रकाशनम्, २००३.
4. ऋग्वेद. अनु. गोविन्द चन्द्र पाण्डे. लोक भारती प्रकाशनम्, २००२.
5. निरुक्तपञ्चाध्यायी, नईदिल्ली : मेहरचन्द लछमनदास पब्लिकेशन्स, २०११.

शोधच्छात्रः, जवाहरलालनेहरुविश्वविद्यालय नई देहली